या अष्टौ मूर्तयस्ताभिस्त्वया व्याप्तं चराचरम् ।
तत्तत्वं नैव पश्यामो यत्वं न भवसीशितः ॥५१॥

त्वत्सत्तयाऽनुविद्धेयं सुषुवे प्रकृतिर्जगत् ।
कादाम्बिनीव त्वय्येव विहृत्य प्रतिलीयते ॥५२॥

तव निःश्वसितं वेदास्तवेक्षा लोकसम्भवः ।
तव क्रोधोद्भवो मृत्युरतः सर्वोत्तमो भवान् ॥५३॥

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
स्वर्गादौ ब्रह्मणस्त्वत्तः सर्वाः प्रादुर्भवन्ति ताः ॥५४॥

यल्लिङ्गाङ्कं त्र्यम्बकः सर्वमीशो
देवी सर्वं यच्च लोके भगाङ्कम् ।
तस्मादस्य त्वं पितोमैव माता
लोकस्यातस्त्वा नुमः साम्बमीशम् ॥५५॥

सूत उवाच ।

इति प्रगृणतां तेषां ब्रह्मनारायणावुभौ ।
शङ्करः स्वयमुत्थाय प्रेम्णा तौ परिषस्वजे ॥५६॥

आसांचक्रे भवानीशस्ताभ्यां सह निजासने ।
व्याजहार त्रयाणां नो न भिदाऽस्ति स्वरूपतः ॥५७॥

पटाकाशादिवद्भेदो व्यवहारेऽस्तु तेन किम् ।
ईशितव्या इमे सर्वे जीवा ईशा वयं त्रयः ॥५८॥

तस्मादस्मिन् मम क्षेत्रे वीरनारायण ! त्वया ।
वस्तव्यं ब्रह्मणाऽपीह यष्टव्यं प्रीतये मम ॥५९॥

क्रतुमाह महेशानो देवकार्यं कृतं त्वया ।
इदं क्रतुपुरं नाम तव नाम्ना भविष्यति ॥६०॥

निखाय लिङ्गत्रितयमेकस्मिन् पीठके त्वया ।
मत्प्रतिष्ठा विधातव्या त्रिकूटेश्वरसंज्ञया ॥६१॥

वीरनारायणस्यास्य मूर्तिं कृत्वा विधानतः ।
त्वया प्रतिष्ठा कर्तव्या नरसिंहसमीपतः ॥६२॥

प्रादुर्भूयात् स्रवन्त्यत्र या नाम्ना गुप्तगामिनी ।
ब्राह्मणाद्याः प्रजाः सर्वाः समेष्यन्ति ततस्ततः ॥६३॥

मम विष्णोश्च सान्निध्यं क्षेत्रेऽस्मिन् सर्वदा भवेत् ।
शिवक्षेत्रमिदं ज्ञेयं विष्णुक्षेत्रमिदं तथा ॥६४॥

चतुर्णां पुरुषार्थानां सिद्धिरत्र करस्थिता ।
किं तस्य दुष्करं यस्य प्रसन्नौ हरिशंकरौ ॥६५॥

युगे युगे समुच्छित्तिमिदं क्षेत्रं प्रयास्यति ।
जीर्णोद्धारं करिष्यन्ति धर्मिष्ठास्तत्र ये नृपाः ॥६६॥

मया यदुक्तं तत्सर्वं क्रतो ! सम्यग्विधाय च ।
वासयित्वा प्रजाः सर्वाः सत्यलोकं ततो व्रज ॥६७॥

गणेशं योजयामास क्रतोः साहाय्यकर्मणि ।
घण्टाकर्णं च भगवान् महेशो निजपार्षदम् ॥६८॥

इत्युक्त्वाऽन्तर्दधे शम्भुस्तथा नारायणो विधिः ।
इन्द्राद्या देवताः सर्वाः स्वानि स्थानानि भेजिरे ॥६९॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
दैत्यवधो नाम तृतीयोऽध्यायः ॥

# ॥ अथ चतुर्थोऽध्यायः ॥

सूत उवाच ।

घण्टाकर्णं क्रतुः प्राह समन्तादटवीमिमाम् ।
छित्वा लोकनिवासाय योग्यस्थानं विधीयताम् ॥१॥

तदाकर्ण्य क्रतुवचो घण्टाकर्णो गणैः सह ।
वनं छेत्तुं समारेभे समन्ताद्योजनत्रयम् ॥२॥

एकेन मासा विपिनं कण्टकद्रुमभीषणम् ।
छित्वा भूमि समां चक्रे आवासानोकहैर्विना ॥३॥

क्रतोराज्ञां पुरस्कृत्य मापयित्वा मही ततः ।
प्राकारं परितश्चक्रे चतुर्गोपुरमण्डितम् ॥४॥

शम्भोःप्रासादमपरं वीरनारायणस्य च ।
कारयामास कुशलैः शिल्पिभिः शिवपार्षदः ॥५॥

समाजग्मुः प्रजाः काले श्रुत्वा क्रतुपुरप्रथाम् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा अथ विलोमजाः ॥६॥

तत्रागतानां लोकानां यद्यत्तेषामपेक्षितम् ।
हेरम्बः प्रापयांचक्रे शिवक्षेत्रविवृद्धये ॥७॥

सत्यलोकं समासाद्य ब्रह्माणं प्रणतः क्रतुः ।
व्यजिज्ञपद्यज्ञकालं देवयोः स्थापनं तथा ॥८॥

सन्तः परार्थैकफला इति शिक्षाऽन्यथा कथम् ।
लोके प्रवर्ततां सन्तो यदि स्युः स्वार्थतत्पराः ॥९॥

तस्य प्रार्थितमाकर्ण्य ब्रह्मा देवैः सहर्षिभिः ।
गन्धर्वैरप्सरोभिश्च भुवमायान्मुदान्वितः ॥१०॥

वीक्ष्य क्रतुपुरं रम्यं प्रासादौ शैववैष्णवौ ।
मुदं परमिकां लेभे साधु साध्वित्यभाषत ॥११॥

लोकेश आगते तत्र समाजग्मुः सहस्रशः ।
तपोधना महाभागास्तान्वक्ष्यामि समासतः ॥१२॥

मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहो भृगुः ।
दक्षो वसिष्ठश्चत्वारः सनकाद्याः सनारदाः ॥१३॥

बृहस्पतिरुतथ्यश्च संवर्तः कश्यपोऽसितः ।
देवलो गौतमः कण्वो जातूकर्ण्यस्तथाऽसुरिः ॥१४॥

बृहदश्वा याज्ञवल्क्यो वामदेवो द्वितस्त्रितः ।
एकतः शङ्खलिखितौ गाधिर्वोधायनस्तथा ॥१५॥

आपस्तम्वो भरद्वाजो गर्गः शातातपः कपिः ।
शाकलः कपिलो धौम्य इत्याद्या ऋषयोऽपरे ॥१६॥

ततो ब्रह्मा सुरैश्चान्यैर्ऋषिभिः सह शास्त्रतः ।
प्रतिष्ठाप्य त्रिकूटेशं होमं कृत्वा विधानतः ॥१७॥

ब्राह्मणान् भोजयित्वाऽथ स्वाद्वन्नैरमृतोपमैः ।
महान्तं कारयामास महं ब्रह्मा महेशितुः ॥१८॥

गणेशं स्थापयामास त्रिकूटेशस्य दक्षिणे ।
पुरगुप्त्या अधिकृतो घण्टाकर्णोऽब्जयोनिना ॥१९॥

वीरनारायणं देवं प्रतिष्ठापयितुं विधिः ।
विधि प्रवर्तयामाम स्वसुतैर्विधिकोविदैः ॥२०॥

मुहूर्ते शोभने देवं प्रतिष्ठाप्य रमापतिम् ।
नृसिंहं च प्रतिष्ठाप्य कृत्वा ब्राह्मणतर्पणम् ॥२१॥

त्रयाणामुत्सवानां हि कृत्वाऽवभृथमन्ततः ।
सन्तोषं परमं लेभे ब्रह्मा लोकपितामहः ॥२२॥

लोकेशं नारदोऽभ्येत्य प्राह प्रश्रयपूर्वकम् ।
प्रतिष्ठा कारिता सम्यक् वृषाकप्योर्यथाविधि ॥२३॥
लक्ष्मीपुरे महालक्ष्मीः स्वनाम्ना लिङ्गमुत्तमम् ।
प्रतिष्ठाप्य तपस्यन्ती वर्तते पतिलब्धये ॥२४॥
आनीयतां महालक्ष्मीर्भर्त्रा योजय माचिरम् ।
इति तस्य वचः श्रुत्वा मुमुदे कमलासनः ॥२५॥
नारायणाज्ञया ब्रह्मा गत्वा लक्ष्मीपुरं जवात् ।
लक्ष्मीलिङ्गं च लक्ष्मी च नत्वा भक्त्या पुनः पुनः ॥२६॥
सम्प्रार्थ्य लक्ष्मीं लोकेश आनिनाय क्रतोः पुरम् ।
युयोज हरीणा लक्ष्मी दाम्पत्यं तद्बभौ तदा ॥२७॥
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ।
पुष्पवृष्टिः पपातोच्चैर्लक्ष्मीनारायणोत्सवे ॥२८॥
तौ प्राञ्चौ दम्पती देवा ऋषयश्च तपोधनाः ।
प्रणेमुस्तुष्टुवुर्भक्त्या सूक्तैरानन्दमेदुराः ॥२९॥
अथात्मभूर्निजसुतानाहूयेदमभाषत ।
सोमादिकाः सप्तसंस्थाः क्षेत्रेऽस्मिन् विदधाम्यहम् ॥३०॥
यज्ञशाला विधीयन्तामामन्त्र्यन्तामथर्त्विजः ।
सम्भाराः संभ्रियन्तां च श्वो यक्ष्ये दीक्षणीयया ॥३१॥
इत्युक्तास्ते मरीचाद्या इन्द्राद्याश्च दिवौकसः ।
सर्वं संपादयामासुर्यदुक्तं यज्ञसाधनम् ॥३२॥
ब्रह्मा वसिष्ठस्तत्रासीदध्वर्युः ससुतोऽङ्गिराः ।
भृगुर्होताऽभवत्तत्र तत्सुतास्तद्गणेऽभवन् ॥३३॥
अत्रिरौद्गात्रमकरोत्स्वपुत्रैः सहितो मुनिः ।
पुलस्त्यपुलहाद्याश्च सर्वे आसन् सभासदः ॥३४॥

चैत्र्यां ब्रह्मा दीक्षितोऽभूद्दीक्षणीयं विधाय सः ।
आरब्धा प्रायणीयेष्टिर्ऋत्विग्भिः कर्मकोविदैः ॥३५॥

प्रवर्तमाने वैधात्रे यज्ञे सर्वगुणान्विते ।
चतुर्विधानामन्नानां पर्वताः सर्वतो बभुः ॥३६॥

सुपर्वणां सुधापानाज्जडिमा रासनेऽभवत् ।
तन्निवृत्त्यै सदन्नानि जजक्षुः षड्रसानि ते ॥३७॥

तौर्यत्रिकं वेदघोषो वादः प्रवदता तथा ।
रोदसी समपूर्येतां मत्तैः शब्दैर्दिवानिशम् ॥३८॥

जगृहुः स्वस्वभागांस्ता यज्ञिया देवतास्तु याः ।
सर्वदेवमयो देवस्तुतोष परमेश्वरः ॥३९॥

मेघगम्भीरनिर्घोषा वागासीदशरीरिणी ।
इदं क्रतुपुरक्षेत्रं समन्ताद्योजनत्रयम् ॥४०॥

इदं शिवमयं पुण्यं शिवभेदैरलंकृतम् ।
काशीक्षेत्रसमं भूमौ सत्यं सत्यं वदाम्यहम् ॥४१॥

इति श्रुत्वा गिरं दिव्यां भेरीभाङ्कारसन्निभाम् ।
अहोक्षेत्रमहोक्षेत्रमिति कोलाहलोऽभवत् ॥४२॥

चैत्रीमारभ्य वैशाखीमवधीकृत्य सन्ततम् ।
सोमाद्या वाजपेयान्ता यथाविध्यध्वराः कृताः ॥४३॥

उद्भूतसलिला तावत् स्रवन्ती गुप्तगामिनी ।
बभूव तस्मिन् वितते क्रतुकर्मणि वेधसः ॥४४॥

इच्छामात्रं प्रभोः सृष्टिरिति सत्यं श्रुतीरितम् ।
तत् स्वानुभवमारूढमित्यूचुर्विस्मिता जनाः ॥४५॥

सनत्कुमारप्रमुखा मुनयः पारमार्थिकाः ।
सम्भाव्य सर्वमेवास्ति मायायामित्यविस्मयाः ॥४६॥

ब्रह्मात्मैक्यविदां तेषां ज्ञानिनां दिव्यदर्शनम् ।
प्रकृतानुपयोगित्वात्तदस्तु मुनिपुङ्गवाः ! ॥४७॥

एवं क्रतुपुरे कृत्वा यज्ञान् लोकगुरुर्विधिः ।
राजानं मैलवंशीयं तत्र संस्थाप्य धार्मिकम् ॥४८॥

चन्द्रसेनाह्वयं नाम चातुर्वर्ण्याभिगुप्तये ।
तस्मै सम्यक् सदाचारमादिदेश पितामहः ॥४९॥

ब्राह्मणान् भर भूदेवान् देवान् यज भजस्व गाः ।
प्रजाः पालय धर्मेण श्रेयः परमवाप्स्यसि ॥५०॥

कारयस्वाप्रमादेन नित्यपूजोत्सवादिकम् ।
त्रिकूटेशस्य लिङ्गस्य वीरनारायणस्य च ॥५१॥

उपदिश्येति राजानं ब्रह्मा स्वतनयैः सह ।
सत्यलोकं ययौ देवा इन्द्राद्याश्च ययुस्तदा ॥५२॥

इदं क्रतुपुराख्यानं ये शृण्वति पठन्ति च ।
नरोपहतपाप्मानस्ते प्राप्स्यन्ति शुभां गतिम् ॥५३॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
ब्रह्मयज्ञोत्सवो नाम चतुर्थोऽध्यायः ॥

# ॥ अथ पञ्चमोऽध्यायः ॥

ऋषय उचुः ।

पवित्रं परमाख्यानं सूत ! संश्रावितं त्वया ।
नानाश्चर्यवती भूमिरस्यां सम्भाव्यतेऽखिलम् ॥१॥

सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः ।
सम्भाव्यं भुविमाहात्म्यं तीर्थक्षेत्रसमुद्भवम् ॥२॥

पुनः क्रतुपुरस्याङ्गमाहात्म्यं श्रोतुमादृताः ।
स्मो वयं विस्मितानस्मान् विस्मापय सुभाषितैः ॥३॥

सूत उवाच ।

ब्राह्मणाः स्थापितास्तत्र चन्द्रसेनो महीपतिः ।
स्फीतं जनपदं चक्रे धर्मतः पालयन् प्रजाः ॥४॥

पूरयामास परितः शाखाग्रामान् स बाहुजः ।
वृत्तीरकल्पयद्राजा देवब्राह्मणगुप्तये ॥५॥

तस्य पुत्रादिभी राज्ञश्चन्द्रसेनस्य धार्मिकैः ।
बहुकालं क्रतुपुरमरक्षि क्षेमकारिभिः ॥६॥

ततो भल्लाटकेनेदमाक्रान्तं दस्युना पुरम् ।
शिबिना राजमुख्येन स दस्युर्विनिपातितः ॥७॥

शिवेः पुण्यकृतो राज्ञश्चरित्रं वर्णितं पुरा ।
तस्य पौत्रप्रपौत्राद्यैः पालितं बहुपूरुषम् ॥८॥

तीर्थयात्राप्रसङ्गेन स राजा जनमेजयः ।
प्राप क्रतुपुरक्षेत्रं तुतोषाऽऽलोक्य भूमिपः ॥९॥

वैशम्पायनतस्तत्र पुनः शुश्राव भारतम् ।
वीरनारायणस्याग्रे सर्पहत्यापनुत्तये ॥१०॥

कोनेरितीर्थनिकट ईजे तत्राभिमन्यव· ।
सहितो ब्राह्मणश्रेष्ठैः पाराशर्यकृपादिभिः ॥११॥

षण्मासानवसत्तत्र राजा पारिक्षितः सुखम् ।
श्रीमद्भागवतं चापि श्रुतवान् व्यासनन्दनात् ॥१२॥

शिवविष्णूत्सवान् कृत्वा सन्तर्प्य ब्राह्मणान् वहून् ।
चक्रे रथोत्सवं राजा देवयोरुभयोर्मुदा ॥१३॥

तत्र कोनेरितीर्थस्य समुत्पत्ति स भूपतिः ।
पप्रच्छ व्याममासीनं त्रिकालज्ञं महामुनिम् ॥१४॥

व्यास उवाच ।

आसीदत्र द्विजः कश्चित् कोनेरिरिति विश्रुतः ।
स वेङ्कटेश भक्तोऽभूद्यात्रिकः प्रतिवत्सरम् ॥१५॥

चत्वारिशत्तथाष्टौ च तेन यात्राः कृता नृप ! ।
यदा जीर्णोऽभवद्विप्रश्चिन्तामाप भृशं तदा ॥१६॥

वृद्धोऽहं नैव शक्नोमि गन्तुमग्रे पदात्पदम् ।
श्रीमद्वेङ्कटनाथस्य दर्शनं मे कथं भवेत् ॥१७॥

पापीयसीं धिग् जरसं पुमान् जीवन्मृतो यया ।
पराधीनाय वृद्धाय मरणं मेऽद्य रोचते ॥१८॥

इति चिन्तयतस्तस्य स्वप्ने शेषाचलेश्वरः ।
निजरूपेण विवभौ तमाह व्राह्मणं हरिः ॥१९॥

भक्त मा खिद्य कोनेरे ! वसामि हृदयं तव ।
अन्तराद्दर्शनाद्विप्र ! दवीयो वाह्यदर्शनम् ॥२०॥

गृहाणेदं धनं विप्र ! तीर्थं कोनेरिसंज्ञितम् ।
कुर्वनेन धनेनात्र पुण्यं लोकहितावहम् ॥२१॥
स्नात्वा निरन्तरं तत्र वीरनारायणं प्रभुम् ।
पश्य यात्राफलं नित्यं प्राप्स्यस्यत्र न संशयः ॥२२॥
इत्युक्त्वा वसु दत्वा च तत्रैवान्तर्दधे हरिः ।
उत्तस्थौ च तदा विप्रो द्रव्यपूर्णकरद्वयः ॥२३॥
पुत्रानाहूय विदुषः पितृभक्तिपरायणान् ।
कोनेरिशर्मा प्रोवाच स्वाप्निकं हर्यनुग्रहम् ॥२४॥
द्रव्यं पुत्रकरे दत्वा कारयामास दीर्घिकाम् ।
निकटे गुप्तगामिन्यास्तत्तीर्थं सलिलाप्लुतम् ॥२५॥
तत्र स्नात्वाऽनुघस्रं स वीरनारायणं द्विजः ।
पूजयामास विधिवद्वेङ्कटेशस्वरूपिणम् ॥२६॥
जगाम श्वित्रिणां श्वित्रं तत्तीर्थसलिलाप्लुतेः ।
उल्लाघा रोगिणोऽभूवन् प्राशनात्तीर्थवारिणः ॥२७॥
एवं सम्पूज्य देवेशं वीरनारायणं द्विजः ।
काले पञ्चत्वमापन्नो जगाम हरिमन्दिरम् ॥२८॥
इति कोनेरितीर्थस्य माहात्म्यं कुरुवंशजः ।
श्रुत्वा सविस्मयो राजा बादरायणवर्णितम् ॥२९॥
ततो जगाम नृपतिर्वेदव्यासादिभिर्वृतः ।
स्वराजधानीं सन्तुष्टः ससैन्यः सावरोधनः ॥३०॥
इति क्रतुपुराख्यानमहं सम्यगचीकथम् ।
नैमिषीयैर्मुनिवरैर्भवद्भिरभिनोदितः ॥३१॥
ये श्रृण्वन्तीदमाख्यानं पवित्रं पापनाशनम् ।
निर्धूतपातकास्ते ते यास्यन्ति परमं पदम् ॥३२॥

भक्त्याऽस्य श्रवणाल्लोके निर्धनो धनमाप्नुयात् ।
पुत्रार्थी प्राप्नुयात् पुत्रं विद्यार्थी तामवाप्नुयात् ॥३३॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥३४॥
वीरनारायणं यो वै भजन् द्रुह्यति शङ्करे ।
हरिं द्विषन् भजेच्छम्भुं तौ ज्ञेयौ रौरवाश्रयौ ॥३५॥
शिवं विना हरिक्षेत्रं शिवक्षेत्रं हरिं विना ।
नास्ति क्वापि मुनिश्रेस्ठास्तस्मात्तावेकरूपिणौ ॥३६॥
पाषण्डिनो भविष्यन्ति प्रायः कलियुगे जनाः ।
तयोरन्यतरद्रोहादवाप्स्यन्त्यधमां गतिम् ॥३७॥
तस्माद्धरिहरौ देवावेकभावेन यो यजेत् ।
श्रद्धया तीर्थमाहात्म्यं स तीर्थफलमाप्नुयात् ॥३८॥
अथ तैरर्चितः सूतः शौनकाद्यैस्तपोधनैः ।
ताननुज्ञाप्य वव्राज स्वस्थानं लोमहर्षणः ॥३९॥
श्रुत्वा क्रतुपुराख्यानं मुनयः शौनकादयः ।
विस्मयं परमं प्राप्य ययुः सन्ध्यामुपासितुम् ॥४०॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
प्रस्तावे कोनेरितीर्थवर्णनं नाम पञ्चमोऽध्यायः ॥

# ॥ अथ षष्ठोऽध्यायः ॥

ऋषय उचुः ।

सूत ! जीव चिरं साधो ! वयं प्रीणीमहे त्वयि ।
यन्नः श्रावयसे नित्यं दिव्यं हरिकथामृतम् ॥१॥

नारायणस्य माहात्म्यं भूयः कथय सौम्य नः ।
कृतक्षणानां श्रवणे हरिप्रवणचेतसाम् ॥२॥

सूत उवाच ।

साधु पृष्टं महाभागाः श्रुणुध्वं कथयामि वः ।
माहात्म्यं देवदेवस्य विष्णोरद्भुतकर्मणः ॥३॥

अवतारा हरेः सन्ति बहवो मङ्गलायनाः ।
तेषामाद्य. परः प्रोक्तः सूक्ते पुरुषसंज्ञिके ॥४॥

स एव महदादीनां स्रष्टा मायी स्वमायया ।
अन्येषामवताराणां निदानं परिकीर्तितम् ॥५॥

सत्वं रजस्तम इति य उक्ताः प्रकृतेर्गुणाः ।
तदुपाधिवशाद्भेदा जायन्ते परमात्मनः ॥६॥

स एव जायते ब्रह्मा रजोगुणपुरस्कृतः ।
तेनाण्डं निर्मितं तस्मात् ब्रह्माण्डमिति गीयते ॥७॥

तमोमोहमहामोहास्तामिस्रान्धतमिस्रकौ ।
अविद्या पञ्च पर्वैषा प्रादुर्भूता महात्मनः ॥८॥

तत्कार्यभूतः सर्गोऽयं तस्मादाविद्यकः स्मृतः ।
पराञ्चि खानि व्यतृणत् स्वयम्भूरिति च श्रुतिः ॥९॥

तस्मात्सर्वेऽपि वै जीवाश्चिदाभासा अहंधियः ।
भगवन्मायया मूढाः संसरन्ति पुनः पुनः ॥१०॥

अवाप्ताखिलकामोऽपि जीवभोगार्थमेव हि ।
सृष्टिस्थित्यत्ययान् देवः काले काले करोत्यजः ॥११॥

सत्वोपाधिः परेशो हि निघ्नन् विश्वद्रुहोऽसुरान् ।
सज्जनान् पालयन् देवो विष्णुसंज्ञां बिभर्त्यजः ॥१२॥

तमोगुणोपाधिकः सन् सम्प्राप्ते प्रतिसञ्चरे ।
अत्ति सर्वं महाग्रासो हर इत्यभिविश्रुतः ॥१३॥

संज्ञाभेदः कर्मभेदो लीलाभेदश्च तापसाः ! ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥१४॥

तावत्सर्वमिदं सत्यं गुणभेदकृतं जगत् ।
यावन्न हृदयग्रन्थिर्विभिन्नोऽनादिरात्मनः ॥१५॥

स्वसृष्टमिदमापीय शेतेऽसौ प्रलयाम्भसि ।
आपो नारा इति प्रोक्तास्तेन नारायणः स्मृतः ॥१६॥

ततः स्वनाभिकमलात्स्वरूपान्तरमास्थितः ।
चतुर्मुखोऽभवद्ब्रह्मा लोकसृष्टिविधायकः ॥१७॥

सोऽसृजन्मानसान् पुत्रान् मरीच्यादीन् स्वदेहतः ।
प्रवृत्तिमार्गनिरतान् सपत्नीकं मनुं तथा ॥१८॥

निवृत्तिमार्गनिरतांश्चतुरः सनकादिकान् ।
तथाऽन्यानपि लोकेशो निर्ममे नारदादिकान् ॥१९॥

तैर्मरीच्यादिभिः पुत्रैः सहितः पद्मसम्भवः ।
व्यसृजद्विविधान् देवान् यथाकर्म यथाश्रुतम् ॥२०॥

असुरान् राक्षसान् नागान् गन्धर्वाप्सरसस्तथा ।
जरायुजानण्डजांश्च स्वेदजानुद्भिजोऽखिलान् ॥२१॥

भूलोकं च भुवर्लोकं स्वर्लोकं च महस्तथा ।
जनोलोकं तपोलोकं सत्यलोकं ससर्ज ह ॥२२॥

तथा कैलासवैकुण्ठलोकौ लोकं गवामपि ।
अतलादीन् बिलस्वर्गान् निर्ममे चतुराननः ॥२३॥

याति लोकत्रयं नाशं नित्यं दैनन्दिने लये ।
चतुर्लोकी नैति नाशं प्राकृतप्रलयादृते ॥२४॥

चतुर्युगसहस्रान्ते लयो दैनन्दिनः स्मृतः ।
विरिञ्चेः शतवर्षान्ते लयः प्राकृत उच्यते ॥२५॥

सुषुप्त्यवस्था जीवानां नित्यप्रलय ईरितः ।
सता भवन्ति सम्पन्नास्तदा जीवाः परात्मना ॥२६॥

ब्रह्मज्ञानेन जीवानां लय आत्यन्तिक स्मृतः ।
अनेकजन्मसंसिद्धास्ते लयं प्राप्नुवन्ति हि ॥२७॥

इन्द्राश्च मनवश्चैव चतुर्दश चतुर्दश ।
प्रतिमन्वन्तरं विष्णोरवतारा भवन्ति हि ॥२८॥

अधर्मस्य विनाशाय धर्मसंस्थापनाय च ।
तत्र तत्र चरित्राणि विष्णोरमिततेजसः ॥२९॥

कीर्तितानि पुराणेषु पुराणज्ञाः प्रचक्षते ।
भूमे रजांसि विममे विष्णुवीर्याणि चैव तु ॥३०॥

हरेः सर्वावतारास्ते पुण्यश्रवणकीर्तनाः ।
श्राव्याः कीर्त्याश्च सततं श्रद्दधानैर्बुभूषुभिः ॥३१॥

नानातीर्थान्यरण्यानि क्षेत्राणि विविधानि च ।
सरांसि सरितः शैलानवताराननेकशः ॥३२॥

मत्स्यं कूर्मम् वराहं च नारसिंहं च वामनम् ।
रामं रामं च कृष्णं च बुद्धं कल्किनमेवच ॥३३॥

यज्ञावतारकपिलं गजेन्द्रार्थं हरिं तथा ।
नरनारायणौ हंसं हयग्रीवं च दत्तकम् ॥३४॥

कृष्णाख्यं च चकारेशो लोकोद्धाराय माधवः ।
अन्ये त्वंशावतारा हि बहवः परिकीर्तिताः ॥३५॥

नाव एताः परिक्षिप्ताः अगाधेऽस्मिन् भवार्णवे ।
उत्तारणाय लोकानामातरो नास्ति यत्र हि ॥३६॥

बदर्याश्रमतः सोयं भगवान् भूतभावनः ।
एत्य क्रतुपुरं पुण्यं वीरनारायणोऽभवत् ॥३७॥

विनिहत्याऽसुरान् दुष्टान् क्षेत्रस्यास्य विरोधिनः ।
भक्तानुकम्पी न्यवसत् पुण्ये क्रतुपुरे हरिः ॥३८॥

तदा ब्रह्मादयो देवाः सनकाद्या महर्षयः ।
ववन्दिरे भक्तियुक्ता वीरनारायणं हरिम् ॥३९॥

तुष्टाव पद्मभूस्तत्र निलिम्पविसराग्रणीः ।
प्रेमगद्गदया वाचा देवं वाचामगोचरम् ॥४०॥

ब्रह्मो वाच ।

महामायिनेऽनन्तकल्याणधाम्ने
निरस्ताघसङ्घाय सर्वोत्तमाय ।
स्वभक्तावनोपात्तदीक्षाय शश्वत्
नमस्कुर्महे वीरनारायणाय ॥४१॥

निहत्यासुरं शङ्खमब्धेः सकाशात्
श्रुतीनां समुद्धारमातन्वते ते ।
महामीनरूपाय लोकैककर्त्रे
नमस्कुर्महे वीरनारायणाय ॥४२॥

सुराणां सुधालब्धये क्षीरसिन्धुं
बलान्मथ्नता मन्दरे मज्जमाने ।
तमुद्बिभ्रते कूर्मरूपं गृहीत्वा
नमस्कुर्महे वीरनारायणाय ॥४३॥

हिरण्याक्षदैत्यं महाम्भोधिगर्भे
गृहीत्वा मही वर्तमानं बलिष्ठम् ।
निहत्यावने. क्रोडरूपेण पात्रे
नमस्कुर्महे वीरनारायणाय ॥४४॥

सुतद्वेपिणं दैत्यराजं नखाग्रै–
र्विदार्य स्वभक्तस्य संरक्षकाय ।
नृसिहाय संस्मर्तृदुःखच्छिदे ते
नमस्कुर्महे वीरनारायणाय ॥४५॥

बलेर्गर्विणः खर्वरूपेण गर्वं
सुपर्वावमन्तुर्निरस्य त्रिलोकीम् ।
सुरेन्द्रस्य दात्रे जगत्क्षेमकर्त्रे
नमस्कुर्महे वीरनारायणाय ॥४६॥

भृगोरन्ववायेऽवतीर्योद्भटानां
नृपाणां निहन्त्रे कुठारेण रोषात् ।
मृधे रैणुकेयाय भूमेः प्रदात्रे
नमस्कुर्महे वीरनारायणाय ॥४७॥

महासेतुमब्धौ विधायाशु तीर्त्वा
प्लवङ्गैस्तमब्धिं पतिं कोणपानाम् ।
निहत्याधिमुन्मूलयित्रे सुराणां
नमस्कुर्महे वीरनारायणाय ॥४८॥

यदोरन्वये सीरिणा साकमेत्य
क्षितौ भारभूतासुराणां निहन्त्रे ।
जगत्पापतापापहृत्कृष्णधाम्ने
नमस्कुर्महे वीरनारायणाय ॥४९॥

दयां तन्वते यज्ञमार्गं निषिध्य
प्रियप्राणिने बुद्धरूपाय तुभ्यम् ।
ततो म्लेच्छसंहारिणे कल्किने च
नमस्कुर्महे वीरनारायणाय ॥५०॥

अनन्तावताराय तत्तच्चरित्रै–
रनन्ताय शान्ताय शश्वत्तमाय ।
अविद्याविहीनाय वेद्याय वेदै–
र्नमस्कुर्महे वीरनारायणाय ॥५१॥

नमः सच्चिदानन्दरूपाय तुभ्यं
नमः स्वानुभूत्यैकमानाय तुभ्यम् ।
नमः कल्पितानल्पविश्वाश्रयाय
नमस्कुर्महे वीरनारायणाय ॥५२॥

इति स्तुत्वा चतुर्वक्त्रः परमात्मानमीश्वरम् ।
प्रणनाम ससाष्टाङ्गं दण्डवद्धरणीतले ॥५३॥

श्रीभगवानुवाच ।

उत्तीष्ठोत्तिष्ठ भद्रं ते कमलासन पद्मभूः ।
स्तुत्याऽनया प्रसन्नोऽस्मि वरं वरय वाञ्छितम् ॥५४॥

ब्रह्मोवाच ।

स्तोत्रमेतन्मया प्रोक्तं ये पठिष्यन्ति मानवाः ।
तेषां प्रसन्नो वरदो भवान् भवितुमर्हति ॥५५॥

श्रीभगवानुवाच ।

त्वया कृतमिदं स्तोत्रं ये पठिष्यन्ति मानवाः
तेभ्योऽहं संप्रयच्छामि भक्तेभ्यो वाञ्छितं फलम् ॥५६॥

विद्यार्थी प्राप्नुयाद् विद्यां धनार्थी धनमाप्नुयात् ।
कन्यार्थी प्राप्नुयात् कन्यां कुलशीलगुणान्विताम् ॥५७॥

रोगान्मुच्येत रोगी च बद्धो मुच्येत बन्धनात् ।
ऋणान्मुच्येदृणग्रस्तः समरे जयमाप्नुयात् ॥५८॥

इदं पुंसवनं स्तोत्रमिदं स्वस्त्ययनं परम् ।
धन्यं यशस्यमायुष्यं तुष्टिपुष्टिप्रदं त्विदम् ॥५९॥

बहुनाऽत्र किमुक्तेन योऽधीते स्तोत्रमन्वहम् ।
ब्राह्ममेतत्सदा तस्य सन्निधौ निवसाम्यहम् ॥६०॥

इति श्रुत्वा भगवतो वाक्यं वाणीपतिस्तदा ।
भगवन्तं प्रणम्यागात् सानुगो रङ्गमण्टपम् ॥६१॥

तत्रोपविश्य वाणीशो विष्णुधर्मान् सनातनान् ।
ऊचिवान् नारदादिभ्यः सम्प्रदायप्रवृत्तये ॥६२॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
भगवद्गुणवर्णनं नाम षष्ठोऽध्यायः ॥

# ॥ अथ सप्तमोऽध्यायः ॥

ऋषय उचुः ।

धर्मान् भागवतान् ब्रह्मा यान् जगाद सनातनान् ।
नारदादिसुरर्षिभ्यस्तान् नः शंस महामते ॥१॥

सूत उवाच ।

शृणुध्वं मुनयः सर्वे धर्मान् भागवतान् शुभान् ।
यान् जगाद स्वपुत्रेभ्यो ब्रह्मा तान् कथयामि वः ॥२॥

ब्रह्मोवाच ।

स्वगृह्योक्तप्रकारेण द्विजत्वं प्राप्य नारद ! ।
ऊर्ध्वपुण्ड्रं मृदा धृत्वा वेदं गुरुकुले पठेत् ॥३॥

नैष्ठिकश्चेद्गुरुकुले वसेत्तत्रैव चाऽऽमृतेः ।
द्वादशाब्दं वसेत्तत्र ह्युपकुर्वाणको व्रती ॥४॥

साङ्गं वेदमधीत्याथ शास्त्राणि च यथामति ।
उद्वहेत् कुलजां कन्यां सवर्णां गुणशालिनीम् ॥५॥

ततो भागवतान् धर्मान् शिक्षेताचार्यसन्निधौ ।
गुरोः शुश्रूषणं कुर्वन् भावयन् गुरुमीश्वरम् ॥६॥

विष्णुमन्त्रं गृहीत्वाऽथ षडङ्गन्यासपूर्वकम् ।
तान्त्रिकं कृत्स्नतो ज्ञात्वा सदाचारपरायणः ॥७॥

सम्प्राप्याध्यात्मविज्ञानं वेदान्तश्रवणादिना ।
आचार्येणाभ्यनुज्ञातो गृहस्थाश्रममाचरेत् ॥८॥

श्रौतं स्मार्तं च कुर्वीत कर्म श्रीहरितोषणम् ।
दारान् सुतान् प्रियान् प्राणान् परस्मै संनिवेदयेत् ॥९॥
एकादश्यामुपवसेत् पक्षयोरुभयोरपि ।
शूद्राहते तप्तमुद्रां न जातु बिभृयाद् द्विजः ॥१०॥
वृन्ताकादिनिषिद्धं यत्तन्नाश्नीयात् कदाचन ।
विष्णुपूजां विना नान्नमश्नीयात् सङ्कटेऽपि हि ॥११॥
सर्वं विष्णुमयं पश्येदाश्वचण्डालगोखरम् ।
भूतद्रोहेण निरयं याति भागवतोऽपि हि ॥१२॥
तुलसीमञ्जरीभिर्यो विष्णुं समभिपूजयेत् ।
तां तस्य भगवान् पूजां गृह्णाति प्रीतमानसः ॥१३॥
महतीमप्यपचितिं विना च तुलसीदलैः ।
मन्यतेऽलवणं पाकमिव तार्क्ष्यनिकेतनः ॥१४॥
स्ववर्णाश्रमकर्माणि श्रौतस्मार्तादिकानि यः ।
निष्कामः प्रीतये विष्णोः कुर्याद्भागवतो हि सः ॥१५॥
कायेन मनसा बुध्या वाह्यैश्च करणैरपि ।
यद्यत् करोति तत्कर्म परस्मै विनिवेदयेत् ॥१६॥
स्वकर्तृत्वं परित्यज्य फलसङ्कल्पवर्जितः ।
कर्म कुर्याद्धरिप्रीत्यै स वै भागवतः स्मृतः ॥१७॥
सम्भवे सति विष्णोर्यः प्रासादादिकमुच्चकैः ।
कुर्याद्वा कारयेद्वाऽपि परान् प्रेर्य प्रयत्नतः ॥१८॥
नित्यपूजादिसिध्ध्यर्थमुत्सवार्थं च पर्वणाम् ।
वृत्यादिकं शाश्वतिकं यः करोति स वैष्णवः ॥१९॥

देवब्राह्मणवृत्तीनामवरोधं करोति यः ।
स वैष्णवोऽपि पापिष्ठो रौरवं नरकं व्रजेत् ॥२०॥

शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।
अनयोरन्तरं नास्ति शब्दतश्चार्थतोऽपि वा ॥२१॥

सत्येवं यः शिवद्वेषं वैष्णवः कुरुते सदा ।
शैवोऽपि विष्णुविद्वेषं निष्कृतिर्न तयोः क्वचित् ॥२२॥

अहं दक्षो भृगुश्चापि शिवद्वेषादवाप्नुमः ।
क्लेशं महान्तमन्येषां द्रोहिणां तत्र का कथा ॥२३॥

दैत्यो हिरण्यकशिपुर्बाणस्तद्वंशजोऽसुरः ।
राक्षसा रावणाद्याश्च विष्णुद्वेषात् क्षयं गताः ॥२४॥

तस्मान्नान्यतरद्वेषं कुर्वन्नन्यतरप्रियः ।
शैवो वा वैष्णवो वाऽपि शाश्वती गतिमाप्नुयात् ॥२५॥

श्रुतयः स्मृतयश्चापि पुराणान्यागमा अपि ।
शिवं विष्णुं च सर्वेशं प्रवदन्ति ह्यभेदतः ॥२६॥

तेषां तात्पर्यमज्ञात्वा मूढाः पण्डितमानिनः ।
यथेष्टं कलहायन्ते वावदूका दुरूहतः ॥२७॥

तेषां पाषण्डिनां जातु संसर्गं नाचरेद्बुधः ।
स एव वैष्णवो ज्ञेयः पाषण्डी नैव वैष्णवः ॥२८॥

शाम्भवा वैष्णवाः सौराः शाक्ता अपि च गाणपाः
जीवब्रह्मैक्यनिष्ठस्य कलां नार्हन्ति षोडशीम् ॥२९॥

वर्षे वर्षे प्रकुर्वीत यो देवस्य रथोत्सम् ।
यथागमं यथाशक्ति स भक्तः श्रीहरेः प्रियः ॥३०॥

विष्णुनैवेद्यभोजी च विष्णुनाम सदा पठन् ।
ध्यायन् तमेव यो नित्यं विहरेत् स हि वैष्णवः ॥३१॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
विष्णुध्यानरतो नित्यं वैष्णवाख्यं लभेत सः ॥३२॥

दुराचारं दुरालापं दुरन्नं दुष्प्रतिग्रहम् ।
दुःसङ्गं च न कुर्याद्यः स वै भागवताग्रणीः ॥३३॥

चातुर्मास्यव्रतपरो निर्जलैकादशीव्रतः ।
विप्रसन्तर्पणपरो द्वादश्यां स हरेः प्रियः ॥३४॥

यस्य भूतदया नास्ति नास्ति यस्य पवित्रता ।
सत्यं नास्ति क्षमा नास्ति वेषधारी स वैष्णवः ॥३५॥

हरये नन्ददीपं यः सर्वकालं प्रयच्छति ।
नन्दन्ति पितरस्तस्य सन्ततिश्चापि नन्दति ॥३६॥

कार्तिके मासि यो विष्णोः कुर्याद्दीपोत्सवं सदा ।
तस्य पुण्यफलं वक्तुं नैव शक्नोमि नारद ! ॥३७॥

संसारेऽस्मिन्नसारे च सारमेतच्चतुष्टयम् ।
अन्नदानं दीपदानं सत्सङ्गो विष्णुकीर्तनम् ॥३८॥

संसारेऽस्मिन्नसारे च सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुपूजनम् ॥३९॥

संसारेऽस्मिन्नसारे च सारमेतच्चतुष्टयम् ।
विरक्तिर्हरिभक्तिश्च निरहङ्कृतिरार्जवम् ॥४०॥

सर्वोपायैः सर्वकालं कामक्रोधादिवर्जनात् ।
यो भजेत हरिं भक्त्या स युक्तः स च पण्डितः ॥४१॥

सा विद्या पूज्यते सद्भिर्यया संसारबन्धनात् ।
विमुच्येत सुधीर्लोके विद्याऽन्या शिल्पनैपुणम् ॥४२॥

यस्य नास्ति हरौ भक्तिर्नौका संसारनीरधेः ।
श्वसन् मृतः स विज्ञेयः शिश्नोदरपरायणः ॥४३॥

पशवः किं न जीवन्ति जीवन्ति तरवो न किम् ।
हरिभक्तिविहीनस्य जीवनं तादृगेव तत् ॥४४॥

स्रावः पातोऽथ वा तस्याः कस्माज्जातो न नारद ! ।
दुर्भगायाः सुतो यस्या जातः श्रीशपराङ्मुखः ॥४५॥

स्ववर्णाश्रमधर्मेण हेतुहीनेन साधुना ।
हर्यर्पितेन शुद्धेन चित्तशुद्धिर्हि जायते ॥४६॥

चित्तशुध्या विविदिषा जायते श्रवणं तया ।
मननं तेन जायेत ध्यानं तेन स्थिरीभवेत् ॥४७॥

साक्षात्कृतिर्निदिध्यासात्ततः कैवल्यमाप्यते ।
ज्ञानादेव तु कैवल्यमित्येव श्रुतिडिण्डिमः ॥४८॥

निर्गुणब्रह्मणः साक्षात्कृतौ कर्म न कारणम् ।
कारणं तत्र विष्णोर्वा भक्तिः शम्भोरहैतुकी ॥४९॥

इदं क्रतुपुरं क्षेत्रं क्षेत्राणामुत्तमं स्मृतम् ।
अत्र सिद्ध्यन्ति कर्माणि तपांसि च तपोधन ! ॥५०॥

क्रतुना मम पुत्रेण कृतमत्र तपो महत् ।
तेन क्रतुपुरं क्षेत्रं तन्नाम्ना प्रथितं भुवि ॥५१॥

गङ्गायां हि यथा फल्गुर्गुप्ता वहति निम्नगा ।
तथैवास्मिन्नपि क्षेत्रे निम्नगा गुप्तगामिनी ॥५२॥

यत्र नारायणो वीरो यत्रास्ति त्र्यम्बकेश्वरः ।
नरसिंहश्च यत्राऽस्ति तस्मात् क्षेत्रमिदं महत् ॥५३॥

विरिञ्चिवचनं श्रुत्वा नारदाद्यास्तपोधनाः ।
विस्मिता अभवन् सर्वे तदा तं क्रतुमस्तुवन् ॥५४॥

विष्णुधर्मानुपादिश्य भगवान् पद्मभूरिति ।
ब्रह्मलोकं ययौ ब्रह्मा नत्वा नारायणं पुनः ॥५५॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
भागवतधर्मकथनं नाम सप्तमोऽध्यायः ॥

# ॥ अथ अष्टमोऽध्यायः ॥

सूत उवाच ।

गते विरिञ्चौ तत्रैव नारदाद्या महर्षयः ।
उपविष्टाः प्रकुर्वाणाः कथां भगवदाश्रयाः ॥१॥

तथा तेषूपविष्टेषु नारदादिषु साधुषु ।
विस्मितावागतौ तत्र ब्राह्मणौ भ्रातरावुभौ ॥२॥

शिवशर्माग्रजस्तत्र विष्णुशर्मानुजस्तथा ।
तौ नत्वा तानृषीन् सर्वानुपविष्टौ तदाज्ञया ॥३॥

तौ विवक्षू समालोक्य देवर्षिर्नारदस्दा ।
तावाह किं विवक्षू स्थ आचक्षाथामशङ्कितौ ॥४॥

शिवशर्मोवाच ।

समानोदर्यकावावामत्रिगोत्रसमुद्भवौ ।
भ्रातरौ दीर्घतपसः पुत्रौ शिष्यौ च तस्य हि ॥५॥

चतुर्दशसु विद्यासु जनकेनैव शिक्षितौ ।
पञ्चत्वमाप्तयोः पित्रोर्विभक्तौ स्वावुभाविह ॥६॥

तथापि नावयोर्नष्टं सौभ्रात्रं साधुवृत्तयोः ।
आहिताग्नी उभावावां शिष्यानध्यापयावहे ॥७॥

शैवोऽहं वैष्णवोऽयं हि तत्र नावाग्रहो महान् ।
शिवसर्वोत्तमत्वं स खण्डयत्यनुजो मम ॥८॥

श्रुतिस्मृतिब्रह्मसूत्रमुखैर्मानैरनेकशः ।
मयाऽपि खण्ड्यते विष्णोः सार्वोत्तम्यं तथैव हि ॥९॥

एवमाग्रहिणोर्नौ हि महाकालोऽत्यगान्मुने ।
सिद्धान्तं नाप्नुवः कोऽत्र देवः सर्वोत्तमस्त्विति ॥१०॥

भवन्तं पारदृश्वानं मन्ये सारस्वताम्बुधेः ।
आवयोः संशयं छित्वा नौ समाधातुमर्हसि ॥११॥

एवं तद्वाक्यमाकर्ण्य नारदो देवदर्शनः ।
वक्तुं तावुपचक्राम मुनीनां तत्र शृण्वताम् ॥१२॥

नारद उवाच ।

युवामाग्रहमुत्सृज्य जिज्ञासू भवथो यदि ।
तर्हि वामुपदेक्ष्यामि तत्वं यत्पारमार्थिकम् ॥१३॥

विनेतुं शक्यते नैव विद्वानपि दुराग्रही ।
मुमुक्षुरेव वेदान्तशास्त्रेऽधिक्रियते यतः ॥१४॥

भ्रातरावूचतुः ।

आवाम् दुराग्रहं त्यक्त्वा भवन्तं शरणं गतौ ।
शाधि नौ भगवन् शिष्यौ त्वं हि नौ परमो गुरुः॥१५॥

एवं तयोः प्रार्थयतोः पश्चात्तापेन युक्तयोः ।
चकारानुग्रहं प्रीतः परमर्षिः स नारदः ॥१६॥

नारद उवाच ।

यदेकं निष्कलं नित्यं निरवद्यं निरञ्जनम् ।
सर्वधर्मविहीनं च सच्चिदानन्दविग्रहम् ॥१७॥

तदेव मायोपहितं सगुणं ब्रह्म गीयते ।
अविद्योपाधिकास्तस्य जीवा आभासकाः श्रुताः ॥१८॥

अग्नेर्यथा विस्फुलिङ्गास्तथा जीवाः परात्मनः ।
सृष्टिकाले व्युच्चरन्ति यथाकर्म यथाश्रुतम् ॥१९॥

मायागुणोपाधिभेदादेकोऽपि परमेश्वरः ।
ब्रह्मा विष्णुश्च रुद्रश्च जायते कर्मसिद्धये ॥२०॥

सृष्टिं रजोगुणी ब्रह्मा विधत्तेऽनेकरूपिणीम् ।
विष्णुः सत्वगुणोपाधिः पाति नानावतारभृत् ॥२१॥

रुद्रस्तमोगुणी सर्वं जगद्ग्रसति संक्षये ।
सृष्ट्यादिकार्यमखिलमनादि श्रुतयो जगुः ॥२२॥

जातं च जायमानं च जनिष्यदपि यज्जगत् ।
सर्वं मायिकमेवेति जानीतं ब्राह्मणौ युवाम् ॥२३॥

जपाकुसुमसान्निध्यात् स्फटिको दृश्यतेऽरुणः ।
स्फटिकेऽरुणिमा सोयमुपाधिकृत एव हि ॥२४॥

एवं ब्रह्मण्यनिर्देश्ये जीवेशाद्यखिलं जगत् ।
दृश्यते मायिकं तेन मुह्यन्ति ज्ञानिनोऽपि हि ॥२५॥

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षीचेता केवलो निर्गुणश्च ॥२६॥

रूपं रूपं प्रतिरूपो बभूव
तदस्यरूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप इयत
इत्याम्नाया आमनन्त्येकमीशम् ॥२७॥

तमेकमीश्वरं शैवाः शिव इत्याहुराग्रहात्
वैष्णवा विष्णुरित्याहुराग्रहान्नतु तत्वतः ॥२८॥

तस्यावतारा देवस्य ब्रह्मविष्णुमहेश्वराः ।
तुल्यमीशत्वमेतेषु न्यूनाधिक्यं न विद्यते ॥२९॥

अयं परस्त्वयं नेति संरम्भाविष्ट चेतसः ।
यातुधाना भवन्त्येव पिशाचा वा न संशयः ॥३०॥

ब्रह्माणं वा हरिं वापि शिवं वा मूढबुद्धयः ।
जीवमुक्तममाहुर्ये चण्डालास्तु त एव हि ॥३१॥

तस्मात्त्रयाणां देवानामेकं स्वाभिमतं श्रयेत् ।
नान्याभ्यां सर्वथा द्रुह्यात् श्रुतितात्पर्यविद्बुधः ॥३२॥

निर्हेतुभिः स्वाचरितैः स्ववर्णाश्रमकर्मभिः ।
श्रुत्युक्ताभिरुपासाभिस्तान्त्रिकीभिश्च वाऽर्चयेत् ॥३३॥

तस्य प्रसादात् संसिद्ध्येत् साधनं श्रवणादि यत् ।
सानुबन्धं क्षयं याति जीवाज्ञानं न संशयः ॥३४॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
जीवभावं परित्यज्य ब्रह्म सम्पद्यते तदा ॥३५॥

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्मलः शान्तो ब्रह्मभूयाय कल्पते ॥३६॥

गुणोपसंहृतिन्यायात् शिवं वा विष्णुमेव वा ।
तावद्भजेत यावद्धि निर्विकल्पं मनो भवेत् ॥३७॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
तदैव ब्रह्मसम्पन्नो जायते मुक्तसंशयः ॥३८॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥३९॥

नारदः पुनरप्येतावाहैवमुपदिश्य हि ।
मया साकमुपायातं देवं वां दर्शयाम्यहम् ॥४०॥

एवं तौ नारदेनोक्तौ वीरनारायणं तदा ।
अपश्यतां नारदेन सहितावग्रजानुजौ ॥४१॥

कर्पूरधामधवलमुमाजानि महेश्वरम् ।
नीलग्रीवमुदाराङ्गं चन्द्रचूडं त्रिलोचनम् ॥४२॥

रिङ्गत्तरङ्गगङ्गाम्बुराजत्तुङ्गकपर्दकम् ।
गौरीवदनपूर्णेन्दुमिलन्नेत्रचकोरकम् ॥४३॥

धृतदर्वीकिराकल्पं गुर्वीभिर्भूतिभिर्युतम् ।
खर्वीभूताब्जभूविष्णुमुर्वीभृद्धनुषं हरम् ॥४४॥

कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
वसानमजिनं गाजं व्याघ्रचर्मोत्तरीयकम् ॥४५॥

निखिलाम्नायसङ्गीतमहिमानं महत्तरम् ।
भूतिभूषितसर्वाङ्गं मृत्योर्मृत्युं जगत्पतिम् ॥४६॥

पार्षदैर्लोकपालैश्च परीतं परमर्षिभिः ।
दिव्यसिंहासनारूढं जगज्जन्मादिकारणम् ॥४७॥

तौ दृष्ट्वैवं महादेवं विस्मयोत्फुल्ललोचनौ ।
हृष्यत्तनूरुहौ सन्नत्कण्ठौ स्तोतुं न शेकतुः ॥४८॥

देवर्षिर्नारदो हर्षाद्भगवन्तमुमापतिम् ।
तुष्टाव वाग्भिरिष्टाभिरष्टमूर्तिं महेश्वरम् ॥४९॥

नारद उवाच ।

जय जय प्रभो सर्वमङ्गलाऽऽ
श्रय निजाश्रितामङ्गलान्तक ।
त्रिपुरसूदनानेकपांसुल–
प्रमुखसंहृतिप्रीणितामर ॥५०॥

परम तावकं भर्गशब्दितं
मह उपासते ये द्विजाः सदा ।
त इह तन्महःसंहृतांहसः
परपदं प्रभो यान्ति शाश्वतम् ॥५१॥

निगमवर्णितानन्तवैभवे
सुगमपूजने सूदितस्मरे ।
रविनिशाकराग्नित्रिलोचने
प्रणतवत्सले प्रीतिरस्तु मे ॥५२॥

विगतमन्यवो वीतमत्सराः
कृतमनोजयाः कामवर्जिताः ।
कलिमलापहं कामपूरकं
स्वहृदि बिभ्रते त्वां महाजनाः ॥५३॥

त्वद्दृत ईशतः सर्गपालना-
प्ययविधौ पटुः कोऽपि नापरः ।
विधिहरी उभौ त्वं च नो पृथक्
गुणकृता भिदा नैव वास्तवी ॥५४॥

विधिललाटजस्त्वं तदास्यभि-
द्धरिपदोद्भवं वारि मूर्ध्नि ते ।
त्वयि ददौ स्वदृक्पद्ममच्युत-
श्चरितमैश्वरं के विजानते ॥५५॥

तव रथो रसा सारथिर्विधि-
र्विधिकराः सुराः सायको हरिः ।
त्रिपुरकं तृणं संहरिष्यतो
जयति सर्वथाऽऽडम्वरो महान् ॥५६॥

क्षितिमुखं प्रभो भूतपञ्चकं
रविशशिप्रयष्टार इत्यमूः ।
परममूर्तयोऽष्टौ लसन्ति ते
प्रकटमीश्वरं त्वां समाश्रये ॥५७॥

इति देवर्षिणा तेन संस्तुतः परमेश्वरः ।
नारदं प्राह देवर्षे ! कच्चिद्दृष्टमिदं त्वया ।।५८।।

श्रीभगवानुवाच ।

मत्तो भिन्नो हरिर्नास्ति नास्मि भिन्नो हरेरहम् ।
आवाभ्यां न पृथक् ब्रह्मा मायिकीयं भिदा हि नः ।।५९।।

मायया मोहितो लोकः प्रज्ञावादान् प्रभाषते ।
तत्त्वमेतन्न जानाति पश्यन्नपि न पश्यति ।।६०।।

त्वादृशाः सुदृशो लोके पश्यन्त्यस्मासु नो भिदाम् ।
वस्त्वेकमिति जानन्तः सन्तः सन्तापवर्जिताः ।।६१।।

यश्चमूढतमो लोके यश्च बुद्धेः परङ्गतः ।
द्वावेतौ सुखमेधेते क्लिश्यन्त इतरे जनाः ।।६२।।

समं भागवताः सन्तो ज्ञेयाश्चिह्नैर्वहिःस्थितैः ।
मुखप्रसादानुमतिप्रतिवाक्यैरकृत्रिमैः ।।६३।।

शिवे विष्णौ समाः सन्तो ज्ञायन्ते प्रोक्तलक्षणैः ।
विपरीतैश्च तैरेव ज्ञायन्ते तद्विरोधिनः ।।६४।।

तत आहूय तौ विप्रौ भगवानब्रवीदिदम् ।
अद्यप्रभृति सन्त्यज्य भेदं हरिहरौ प्रति ।।६५।।

समभागेन वर्तेथां भजमानौ यथारुचि ।
मां वा हरिं वा नेक्षेथा मावयोरन्तरं क्वचित् ।।६६।।

युवामल्पेन कालेन शुद्धं ज्ञानमवाप्स्यथः ।
अधिष्ठानं विवर्तस्य द्रक्ष्यथो ब्रह्म निष्कलम् ।।६७।।

इत्युक्त्वानुपदं शम्भुर्वीरनारायणोऽभवत् ।
शम्भुं तमेव तौ विप्रौ नारायणमपश्यताम् ।।६८।।

तदा नारायणो देव स्तावुवाच हसन्निव ।
युवयोः संशयः कच्चित् प्रनष्टः स्पर्धमानयोः ॥६९॥

सन्तो मयि शिवे ये च भिदामल्पीयसीमपि ।
वस्त्वेकत्वान्नपश्यन्ति पश्यन्ति क्षुद्रबुद्धयः ॥७०॥

आम्नाया आहुरुदरमन्तरं कुरुते तदा ।
भयं भवति तस्येति तस्माद्भेदं विवर्जयेत् ॥७१॥

यावान् यावान् भवेद्भेदे पुरुषस्य दुराग्रहः ।
तावांस्तावान् भवेद्बन्धमूलो मोहस्ततस्तमः ॥७२॥

आसुरी तमसा योनिमापन्नो जन्मजन्मनि ।
मामप्राप्यैव मूढात्मा ततो यान्त्यधमां गतिम् ॥७३॥

तस्माद्युवामभेदेन मामुमारमणं तथा ।
पश्यतं भजतं भक्त्याह्यचिरान्मोक्षमाप्स्यथः ॥७४॥

एवं श्रुत्वा भगवतो वाक्यं पीयूषसन्निभम् ।
भूत्वा तौ मुदितौ विप्रौ देवं तुष्टुवतुस्तदा ॥७५॥

ब्राह्मणावूचतुः ।

पञ्चाननाय दशबाहव ईश्वराय
चन्द्रोपमैकवदनाय चतुर्भुजाय ।
शूलायुधाय धृतशङ्खसुदर्शनाय
सर्वोत्तमाय हरयेऽस्तु नमो हराय ॥७६॥

पीताम्बराय परमाद्भुतवैभवाय
द्वीपीभचर्मवसनाय वरप्रदाय ।
पद्मालयाप्रणयिने गिरिजाधवाय
सर्वोत्तमाय हरयेऽस्तु नमो हराय ॥७७॥

कर्पूरकुङ्कुमविलेपनचर्चिताय
कण्ठप्रदेशविलसत्प्रभकौस्तुभाय
सर्वाङ्गलिप्तभसिताय लसद्विषाय
सर्वोत्तमाय हरयेऽस्तु नमो हराय ॥७८॥

वैकुण्ठसेवनपराय परात्पराय
श्रीकण्ठपूजनत आप्तसुदर्शनाय ।
तार्क्ष्यध्वजाय विभवे वृषभध्वजाय
सर्वोत्तमाय हरयेऽस्तु नमो हराय ॥७९॥

दर्वीकरोत्तमसुतल्पशयाय नित्यं
देवाय तक्षकसुवासुकिकुण्डलाय ।
मायाविलासधृतविष्णुशिवाभिधाय
सर्वोत्तमाय हरयेऽस्तु नमो हराय ॥८०॥

एवं स्तुत्वा हरिहरौ भगवन्तौ भवच्छिदौ
त्यक्तभेदाग्रहौ विप्रौ तौ प्रणेमतुरंजसा ॥८१॥

भगवानुवाच ।

उत्तिष्ठतं विप्रवरौ नारदस्य प्रसादतः ।
सम्यक् ज्ञानं समभवद्युवयोराग्रहान्तकृत् ॥८२॥

आचार्यवान् हि पुरुषो वेदेति श्रुतिरब्रवीत् ।
युवामाचार्यवन्तौ स्थः कृतकृत्यौ भविष्यथः ॥८३॥

तदाऽऽज्ञप्तो भगवता नारदो मुनिसत्तमः ।
ताभ्यां सहान्तेवासिभ्यां प्रासादान्निर्ययौ बहिः ॥८४॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
नारदोपदेशो नामाष्टमोऽध्यायः ॥

# ॥ अथ नवमोऽध्यायः ॥

सूत उवाच ।

दृष्ट्वा जिगमिषुं विप्रौ स्वगुरुं नारदं तदा ।
साष्टाङ्गं प्रणिपत्योभौ प्रार्थयामासतुर्मुनिम् ॥१॥

मुने संशयरोगेणसुचिरं तिष्ठता हृदि ।
क्लिष्टौ चिकित्सितावावां भववैद्येन भो त्वया ॥२॥

जन्मदातृब्रह्मदात्रोर्वरीयान् ब्रह्मदः पिता ।
प्राणान् वित्तं गृहं दारानाचार्यः सर्वमर्हति ॥३॥

त्वं नौ माता पिता त्वं नौ त्वं बन्धुस्त्वं सखा गुरुः ।
अविद्यायाः परं पारं यन्नौ दर्शितवानसि ॥४॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन स गुरुः सर्वमर्हति ॥५॥

गृहं पुनीमहे स्वामिन् स्वपादरजसा गुरो ! ।
निनाय प्रार्थनां कृत्वा नारदं स्वगृहं प्रति ॥६॥

मधुपर्कविधानेन पूजयामास नारदम् ।
शिवशर्मा महाबुद्धिरनुजेन सहादरात् ॥७॥

देवर्षिं भोजयामास पायसेन ससर्पिषा ।
शर्करामधुमिश्रेण भक्तिसत्कारपूर्वकम् ॥८॥

भुक्तवन्तं निजाचार्यमाचान्तं सुखमास्थितम् ।
भूयोभूयः प्रणम्याग्रे स्थितौ तावग्रजानुजौ ॥९॥

नारदस्तौ पुनः प्राह यन्मयोक्तं युवां प्रति ।
ज्ञानं परमकं तेन कृतकृत्यौ भविष्यथः ॥१०॥

देवर्षिरिति तावुक्त्वा यथागतमगान्मुनिः ।
अभूतां भ्रातरौ खिन्नौ गते तस्मिन् महामुनौ ॥११॥

संसारभारं निक्षिप्य स्वस्वपुत्रेषु तौ तदा ।
ब्रह्मध्यानपरौ नित्यं विविक्तस्थौ बभूवतुः ॥१२॥

विलाप्य भूमिं पयसि तदग्नौ तं नभस्वति ।
तमाकाशे सतन्मात्राण्येतानि प्रविलाप्य तु ॥१३॥

अहङ्कारे तमाकाशं सशब्दं प्रविलाप्य च ।
अहङ्कारं महत्तत्त्वे महतत्वं स्वकारणे ॥१५॥

विलाप्य प्रकृतिं पञ्चविंशके पुरुषे परे।
महावाक्यमखण्डार्थं भावयानौ निरन्तरम् ॥१५॥

त्यक्तेषणात्रयौ लोके सन्त्यक्ताहंमती उभौ ।
मानापमानयोस्तुल्यौ तुल्यौ मित्रारिपक्षयोः ॥१६॥

तद्बुद्धी च तदात्मानौ तन्निष्ठौ तत्परायणौ ।
विलोकयन्तौ निखिलं जगन्मृगजलोपमम् ॥१७॥

समाधिस्थौ घूर्णिताक्षौ सदा मदगजाविव ।
कामचारौ कामभक्षौ यत्र क्वचन शायिनौ ॥१८॥

क्वचिद्बालौ क्वचिन्मत्तौ पिशाचौ च क्वचित् क्वचित् ।
लोकैराभाष्यमाणौ तावभाषेतामसङ्गतम् ॥१९॥

मुक्तौ विधिनिषेधाभ्यां निगडाभ्यां क्रियावताम् ।
कोऽत्र रोद्धुं समर्थः स्यात्तावलौकिकवारणौ ॥२०॥

पञ्चकोशाह्वयैः पाशैर्बद्धं तज्जगत्रयम् ।
क्लेशं महान्तं लभते विनैकं ब्रह्मदर्शिनम् ॥२१॥

सञ्चितेषु विनष्टेषु क्रियमाणैः सहैव हि ।
प्रारब्धं लोकदृष्ट्यैव दृश्यते ब्रह्मदर्शिनाम् ॥२२॥

आदेहपातात् प्रारब्ध भुञ्जानौ तौ यदृच्छया ।
लोके चरन्तौ देवर्षिर्ददर्श पुनरागतः ॥२३॥

ब्रह्मभावं गतौ तौ हि ग्रस्तत्रिपुटिकौ द्विजौ ।
विलोक्य नारद. प्रीत आलिलिङ्ग पुन· पुनः ॥२४॥

तयोर्दर्शनसञ्जातपरमानन्दमेदुर. ।
ननर्त नारदोऽत्युच्चै· शोभन शोभनं ब्रुवन् ॥२५॥

भवाकूपारपारीणौ ब्रह्मभूय गताविमौ ।
युवयोः क्व गतो भेद इति पृच्छामि कावहम् ॥२६॥

इत्युक्त्वा पुनरालिङ्ग्य तावुभौ ब्राह्मणोत्तमौ ।
ततो विष्णुं शिवं दृष्टवा ययावाकाशगो मुनिः ॥२७॥

काले प्राप्ते तयोर्देहौ पतितौ स्थूलसञ्ज्ञितौ ।
लिङ्गभङ्गोऽपि सञ्जातः स तु शास्त्रैकगोचरः ॥२८॥

नारदानुग्रहादेव भेदबुद्धिं विहाय तौ ।
ब्रह्मभावं गतौ तस्माद्भेदः संसारकारणम् ॥२९॥

सालोक्यमपि सामीप्यं सारूप्यं सार्ष्टिरेवच ।
एतेषु मुक्तिशब्दोयमुपचारात् प्रयुज्यते ॥३०॥

अत एव हि वैकुण्ठाज्जयो विजयकस्तथा ।
आसुरी योनिमापन्नौ राक्षसीच ततो गतौ ॥३१॥

सगुणब्रह्मनिष्ठानां विरक्तानां महात्मनाम् ।
ब्रह्मलोकं गतानां तु ज्ञानात् कैवल्यमीरितम् ॥३२॥

वीरनारायणस्येदं महात्म्यं कथितं मया ।
भवतां प्रीतये विप्राः किं भूयः श्रोतुमिच्छथ ॥३३॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
विप्रकैवल्यकथन नाम नवमोऽध्यायः ॥

# ॥ अथ दशमोऽध्यायः ॥

ऋषय ऊचु. ।

वीरनारायणात्पूर्वं नृसिंहः सूत नंदन ! ।
तत्रोवासेति यत्प्रोक्तं ब्रूहि तद्वासकारणम् ॥१॥

सूत उवाच ।

साधु पृष्टं महाभागा. कथयामि कथामिमाम् ।
शृणुध्वं तत्र भगवान् नरसिंहो यथाऽऽगतः ॥२॥

आसीत् क्रतुपुरे कश्चिद्ब्राह्मणः संशितव्रतः ।
पुण्डरीकाह्वयः साधुरनूचानश्च कूकुदः ॥३॥

नृसिंहोपासको नित्यं मन्त्रराजस्य जापकः ।
अहोबलनृसिंहस्य यात्रिकः प्रतिवत्सरम् ॥४॥

एवं बह्वीः समा· कुर्वन् यात्रां देवस्य वाडवः ।
जरत्वमगमत् काले' यात्रां कर्तुं न शक्नुवन् ॥५॥

वृद्धः क्रतुपुरे तिष्ठन्नजस्रं ब्राह्मणोत्तमः ।
मन्त्रराजं जपन् भक्त्या नृसिंहाष्टोत्तरं तथा ॥६॥

निनाय कालं मरणं प्रतीक्षन् शिथिलाङ्गकः ।
स्तुवन् नृसिंहं मततं तमेव हृदि भावयन् ॥७॥

ऋपय ऊचुः ।

नाम्नामष्टोत्तरं श्रोतुमिच्छामो नृहरेर्वयम् ।
स्तोत्रं च तत्कृतं सूत ! तन्नः शंसितुमर्हसि ॥८॥

सूत उवाच ।

नाम्नामष्टोत्तरं पुण्यं कथयिष्यामि वः शुभम् ।
शृणुध्वं नरसिंहस्य स्तोत्रं च मुनिसत्तमाः ॥९॥

ऋषिर्ब्रह्माऽत्र देवस्तु सोऽनुष्टुप् छन्द उच्यते ।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः ॥१०॥

क्ष्रा क्ष्री क्ष्रूं क्ष्रै तथा क्ष्रौ क्ष्रः एभिश्च प्रणवादिकैः ।
षड्भिर्बीजैः षडङ्गेषु कुर्यान्न्यासं समाहितः ॥११॥

"ॐ सहस्रार हुंफट्" कुर्याद्दिग्बन्धनं बुध. ।
ततो ध्यायेन्नरहरिं स्वहृत्कमलमध्यतः ॥१२॥

कर्पूरधामधवलं कटकाङ्गदाहि—
च्छत्रत्रिनेत्रशशिशेखरमण्डितास्यम् ।
वामाङ्कसंस्थितरमानयनाभिरामं
शङ्खाब्जचक्रगदिनं नृहरिं स्मरामि ॥१३॥

इति ध्यात्वा नरहरिं मानसैरुपचारकैः ।
सम्पूज्य प्रयतो भक्त्या जपेदष्टोत्तरं द्विजः ॥१४॥

श्रीनृसिंहः पुष्कराक्षः करालो विकृताननः ।
हिरण्यकशिपोर्वक्षोविदारणनखाङ्कुशः ॥१५॥

प्रह्लादवरदः श्रीमानप्रमेयपराक्रमः ।
असुरानीकसंहर्ता भजत्कल्पमहीरुहः ॥१६॥

ज्वालामुखस्तीक्ष्णसटस्तीक्ष्णदंष्ट्रो भयंकरः ।
शङ्कूपमस्तब्धकर्णः सटोद्धूतबलाहकः ॥१७॥

त्रिणेत्रः कपिलः प्रांशुः सोमसूर्याग्निलोचनः ।
स्थूलग्रीवः स्तब्धदृष्टिर्जाम्बूनदसमप्रभः ॥१८॥

दैत्यान्त्रावलिविभ्राजद्विशालहृदयस्थलः ।
उपसंहृतसप्तार्चिः कवलीकृतमारुतः ॥१९॥

दिग्दन्तावलदर्पघ्नः काद्रवेयविषापनुत् ।
आभिचारिकसंहर्ता ब्रह्मण्यो ब्रह्मवित्प्रियः ॥२०॥

समुद्रगर्भनिर्मग्नरसोद्धारविचक्षणः ।
अत्युग्रतेजःप्रसरसन्तापितजगत्त्रयः ॥२१॥

हृषीकेशो जगत्प्राणः सर्वगः सर्वकामदः ।
व्याप्तिप्रत्ययनार्थाय स्तम्भाविष्कृतविग्रहः ॥२२॥

हिरण्यकशिपूदग्रप्रभावशमनोद्भटः ।
दैत्यवक्षःकटाहाग्रनिमग्ननखरव्रजः ॥२३॥

भीमदंष्ट्रो भीममुखो भीमदृग्भीषणाकृतिः ।
जगज्जन्मस्थेमकर्ता संहर्ता कालरूपधृक् ॥२४॥

विष्णुर्जिष्णुर्जगद्व्यापी विश्वरूपो विराट् प्रभुः ।
योगिहृत्पद्मनिलयो योगेशो योगिनांगतिः ॥२५॥

चिद्रूपः प्रकृतेः साक्षी गुणातीतो निरञ्जनः ।
मायावी मायिनामग्र्यः कल्याणगुणशेवधिः ॥२६॥

कमनीयतरः काम्यः कामतातः कृपार्णवः ।
पुण्यकीर्तिः पुण्यलभ्यः पुण्यश्रवणकीर्तनः ॥२७॥

मन्त्रराजमहायन्त्रजापकार्चकवल्लभः ।
मन्त्रमूर्तिः परेषां च मन्त्रयन्त्रविभञ्जनः ॥२८॥

उग्रो वीरो महाविष्णुः प्रज्वलन् सर्वतोमुखः ।
विश्वतोबाहुरनघो विश्वतस्थस्त्रिविक्रमः ॥२९॥

केशवः क्लेशहाऽनन्तस्तारः पारो भवाम्बुधेः ।
रामोऽभिरामो वीरेशो रावणान्वयदावधक् ॥३०॥

सीराभिकृष्टयमुन. प्रलम्बाद्यसुरान्तकृत् ।
वल्लवीरासरसिकः कंसारिः कालियाहिजित् ॥३१॥

अष्टादशाक्षौहिणीनां निहन्ता पार्थसारथिः ।
देवकीनन्दनः कृष्ण. परमात्मा परात्परः ॥३२॥

नारायणोऽच्युतः सच्चित् परब्रह्म परायणः ।
नाम्नामष्टोत्तरशतं नृसिंहस्य परात्मनः ॥३३॥

यस्त्रिसन्ध्यमिद नित्यं द्विजः पठति भक्तिमान् ।
भवन्ति तस्य भक्तस्य करस्थाः सर्वसिद्धयः ॥३४॥

आपदो विलय यान्ति नाश च परिपन्थिनः ।
ब्रह्मराक्षसवेतालकूष्माण्डाद्या महाग्रहाः ॥३५॥

अस्य स्तोत्रस्य पठनात् पलायन्ते दिशो दश ।
विवादे जयमाप्नोति समर्थो ग्रन्थधारणे ॥३६॥

बन्धनान्मुच्यते बद्धो रुग्णो रोगाद्विमुच्यते ।
दरिद्रो धनमाप्नोति पुत्रार्थी पुत्रमाप्नुयात् ॥३७॥

यं यं कामयते कामं तं तमाप्नोत्यसंशयः ।
इत्येतन्नरसिंहस्य नाम्नामष्टोत्तरं शतम् ॥३८॥

कथितं मुनयः स्तोत्रं कथयाम्यवधार्यताम् ॥३९॥

सूत उवाच ।

ऋषिभिः सह शक्राद्या देवा ब्रह्माणमब्रुवन् ।
कैर्मन्त्रैः संस्तुतो देवस्तुष्टो भवति तद्वद ॥४०॥

ब्रह्मोवाच ।

यो वै नृंसिंहो भगवानभूद्ब्रह्मा सनातनः ।
कुर्वे भगवते तस्मै नृसिंहाय नमोनमः ॥४१॥

यो वै नृसिहो भगवानभूद्विष्णु· सनातनः ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४२॥

यो वै नृसिहो भगवानभूद्रुद्रः सनातनः ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४३॥

यो वै नृसिहो भगवानभवत्पुरुपः परः ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४४॥

यो वै नृसिहो भगवानभूद्वाणी सनातनी ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४५॥

यो वै नृसिहो भगवानभूल्लक्ष्मीः सनातनी ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४६॥

यो वै नृसिहो भगवानभूद्गौरी सनातनी ।
कुर्वे भगवते तस्मै नृसिहाय नमोनम· ॥४७॥

यो वै नृसिहो भगवानोङ्कारोऽभूत् सनातनः ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४८॥

यो वै नृसिहो भगवान् सप्तव्याहृतयोऽभवत् ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥४९॥

यो वै नृसिहो भगवान् साङ्गाः सस्मृतयोऽभवत् ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥५०॥

यो वै नृसिहो भगवानभूद् दिक्पतयोऽखिलाः ।
कुर्वे भगवते तस्मै नृसिंहाय नमोनमः ॥५१॥

यो वै नृसिहो भगवानभूत्रेता सनातनी ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥५२॥

यो वै नृसिंहो भगवानादित्या अभवत् स्वयम् ।
कुर्वे भगवते तस्मै नृसिंहाय नमोनमः ॥५३॥

यो वै नृसिहो भगवान् रुद्रा एकादशाऽभवत् ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥५४॥

यो वै नृसिहो भगवानभूदष्टग्रहाः स्वयम् ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥५५॥

यो वै नृसिहो भगवानभवद्भूतपञ्चकम् ।
कुर्वे भगवते तस्मै नृसिंहाय नमोनमः ॥५६॥

यो वै नृसिंहो भगवानभूज्जीव. सनातनः ।
कुर्वे भगवते तस्मै नृसिहाय नमोनमः ॥५७॥

यो वै नृसिंहो भगवानभूत्सर्वं सनातनः ।
कुर्वे भगवते तस्मै नृसिंहाय नमोनमः ॥५८॥

सूत उवाच ।

नृसिहतापिनीप्रोक्तं स्त्रोत्रमेतत् पठन् द्विजः ।
पुण्डरीको नृसिंहं तं दर्शनार्थं व्यजिज्ञपत् ॥५९॥

ततः प्रसन्नो नृहरिः प्रत्यक्षोभूत्तदग्रतः ।
रमान्विङ्गितवामाङ्गः शङ्खचक्रगदाधरः ॥६०॥

ब्रह्मादिभिः सुरगणैः सनकादैस्तपोधनैः ।
गरुत्मता च शेषेण परिप्लुतगुणोत्तमः ॥६१॥

तं दृष्टवा परमात्मानं नृसिहं च स सम्भ्रमात् ।
साष्टाङ्गं दण्डवद्विप्रः प्रणनाम पुनः पुनः ॥६२॥

श्रीनृसिह उवाच ।

उत्तिष्ठोत्तिष्ठ भद्रं ते पुण्डरीक द्विजाग्रणीः ।
त्वदर्थमागतोऽस्म्यत्र सर्वगोऽपि हि मूर्तिमान् ॥६३॥

वरं वरय मत्तस्त्वं वाञ्छितं वरदर्षभात् ।
सर्वथा दर्शनं मेऽद्य न मोघं भवति द्विज ॥६४॥

पुण्डरीक उवाच ।

तव सन्दर्शनादन्यं कं वरं वरयाम्यहम् ।
कृतार्थोस्म्यद्य संवृत्तस्त्वां दृष्टवा मां च चक्षुषा ॥६५॥
न कामान् कामये स्वामिन् ! मृगतृष्णोपमांश्चलान् ।
दूरीकुरु कृपासिन्धो ! तव मायां दुरत्ययाम् ॥६६॥
यद्यवश्यं वरो देयस्त्वया नरमृगाकृते ।
तर्ह्यत्रैव सदा तिष्ठन् भक्तानां वरदो भव ॥६७॥

श्रीनृसिंह उवाच ।

एवमस्तु तव प्रित्यै वसाम्यत्र तपोधन ! ।
भक्तानां पूरयन् कामान् देवानामपि दुर्लभान् ॥६८॥
श्रीनृसिंहेति मे नाम चतुरक्षरमर्थदम् ।
यस्य वाचि सदा तिष्ठेत्तस्य संसारभीः कुतः ॥६९॥
भक्तानामनुरक्तानां वशगोऽहं जगत्पतिः ।
भिनद्मि तेषां दुःखानि प्रह्लादोऽत्रनिदर्शनम् ॥७०॥
इत्युक्त्वा तं द्विजवरं नरसिंहः सुरैः सह ।
तत्रै वान्तर्दधे तस्य पुण्डरीकस्य पश्यतः ॥७१॥
अन्तर्हिते नरहरौ पुण्डरीकस्तदा मुदा ।
नृसिंहप्रतिमां रम्यां स्थापयामास भक्तितः ॥७२॥
तदादि तत्क्रतुपुरं नृसिंहक्षेत्रमूचिरे ।
त्रिकूटेश्वरसंवासात् शिवक्षेत्रं च तञ्जगुः ॥७३॥

नृसिहोपास्तिपरमः पुण्डरीकद्विजोत्तमः ।
काले प्राप्ते ब्रह्मलोकमर्चिरादिपथा ययौ ।।७४।।

इत्येतत्कथितं विप्रा नृसिहाख्यानमुत्तमम् ।
द्विजस्य पुण्डरीकस्य भक्त्या प्रादुरभूद्धरिः ।।७५।।

य एतच्छ्रुणुयाद्भक्त्या नृसिहचरितं शुभम् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।।७६।।

।। इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
नृसिंहप्रादुर्भावो नाम दशमोऽध्यायः ।।

# ॥ अथ एकादशोऽध्यायः ॥

ऋषय ऊचुः ।

त्रिकूटेश्वरमाहात्म्यं श्रोतुमिच्छामहे वयम् ।
तन्नः शंस महाबुद्धे ! महेशचरितं महत् ॥१॥

त्रिकूटेश्वर इत्येषा संज्ञा देवस्य शूलिनः ।
कस्माद्वै कारणात् प्राप्ता श्रोतुं कौतूहलं हि नः ॥२॥

सूत उवाच ।

साधु पृष्टं महाभागा ऋषयः शौनकादयः ।
शृणुध्वं चरितं शम्भोः कथयामि सतां प्रियम् ॥३॥

विद्युन्माली हेममाली मेघमालीति ते त्रयः ।
पाताले न्यवसन् दैत्याः प्रागेव त्रिपुरक्षयात् ॥४॥

त्रिपुरेशस्य दैत्यस्य पुत्राः सुत्रामशत्रवः ।
ते ससैन्याः समुत्तस्थुः कृतवैरे महेश्वरे ॥५॥

त्रिदशान् त्रासयामासुः स्वर्गमावृत्य सर्वतः ।
तेषां सेनानिवेशं तु दृष्टवा शक्रपुरोगमाः ॥६॥

युद्धाय निर्ययुर्देवा दंशिताः सेनया वृताः ।
आदित्या वसवो रुद्रा मरुतश्च महाबलाः ॥७॥

साध्या विश्वे च पितरः सर्पा यक्षाश्च गुह्यकाः ।
गन्धर्वा राक्षसाश्चैव लोकपालाः सहाययुः ॥८॥

तेषां युद्धं समभवद्दारुणं समरेऽसुरैः ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥९॥

एवं प्रवृत्ते तुमुले संप्रहारे सुदारुणे ।
प्रदुद्रुवुस्ताड्यमाना असुरैः समरे सुराः ।।१०।।

त्रातारं नाधिगच्छन्तः शङ्करं शरणं ययुः ।
सा वित्रस्ता देवसेना कैलासगिरिमभ्यगात् ।।११।।

विद्राणां देवसेनां तामासुरी पृष्ठतो ययौ ।
योजनान्तरिते सेने उभे तत्रोषतुर्द्विजाः ।।१२।।

ततः शक्रादयो देवा मरीच्याद्या महर्षयः ।
ब्रह्मविष्णू पुरोधाय शङ्करं शरणं ययुः ।।१३।।

कैलासशिखरे रम्ये प्रासादे हाटके शुभे ।
नवरत्नप्रभापुञ्जकिर्मीरितनभोङ्गणे ।।१४।।

पारिजाततरुभ्राजन्निष्कुटे मणिकुट्टिमे ।
मणिस्तम्भसहस्राढ्ये दिव्यप्राकारगोपुरे ।।१५।।

केकिपारावताघुष्टेऽगरुधूपविधूपिते ।
रत्नदीपप्रभोदस्ततमस्तोमे दिवानिशम् ।।१६।।

किन्नरीगीतमुदितमृगशावोपरञ्जिते ।
सर्वत्र प्रमथाकीर्णे वेत्रिकोलाहले कुले ।।१७।।

चामरग्राहिणीनां च देवीनां मञ्जुशिञ्जितैः ।
जितवीणाकलरवे नित्यानन्दमहोत्सवे ।।१८।।

तत्र सिंहासने रम्ये दिव्यहाटकनिर्मिते ।
महार्हमणिभिर्युक्ते भास्करायुततेजसि ।।१९।।

समासीनं महादेवं भगवन्तं त्रिलोचनम् ।
निष्कलं निर्मलं शान्तं माययोपात्तविग्रहम् ।।२०।।

उपास्यमानं दिव्याभिर्नवभिः शक्तिभिः सदा ।
दिव्यरूपधरैः शान्तैः पार्षदैरुपसेवितम् ।।२१।।

कर्पूरधवलं चन्द्रकलाकलितशेखरम् ।
नीलकण्ठं चतुर्बाहुं भस्मोद्धूलितविग्रहम् ॥२२॥

रुद्राक्षमालाभरणं नागयज्ञोपवीतिनम् ।
वराभयमृगोदग्रशूलपाणिं महेश्वरम् ॥२३॥

कारुण्यामृतवाराशिं पशुपाशविमोचनम् ।
वामाङ्कारूढया गौर्या परिष्वक्तं जगत्पतिम् ॥२४॥

तं दृष्टवा तादृशं देवं हरिब्रह्मादयः सुराः ।
ऋषयश्च महाभागाः प्रणेमुर्दण्डवद्भुवि ॥२५॥

उत्तिष्ठतोत्तिष्ठतेति तानाह गिरिजापतिः ।
अथोत्थाय सुराः सर्वे तुष्टुवुस्तं महेश्वरम् ॥२६॥

देवा ऊचुः ।

नमः शिवाय शान्ताय सर्वज्ञायाखिलात्मने ।
जगदानन्ददात्रे च परमानन्दमूर्तये ॥२७॥

अरूपाय सरूपाय गुणिने निर्गुणाय च ।
विरूपाक्षाय विश्वस्मै विश्वातीताय ते नमः ॥२८॥

नमस्त्रैलोक्यनाथाय नमस्ते परमात्मने ।
नमोऽशेषविशेषाय शेषभोगाङ्गदाय च ॥२९॥

श्रीकण्ठाय नमस्तुभ्यं विषकण्ठाय ते नमः ।
वैकुण्ठेन स्वदृक्पद्मार्पणप्रीताय शम्भवे ॥३०॥

नमोऽष्टमूर्तयेऽनन्तमूर्तयेऽकुण्ठशक्तये ।
भस्मोद्धूलितदेहाय मायातीताय मायिने ॥३१॥

अचिन्त्याव्यक्तरुपाय विष्णुब्रह्मादिरूपिणे ।
सद्योजातादिभिः पञ्चब्रह्ममन्त्रैः स्तुताय च ॥३२॥

दैत्येश्वरार्चित ! सुरार्तिहरं प्रपन्नं
वन्दारुकल्पतरुमीप्सितकामपूरम् ।
संसाररोगशमनक्षमनाममात्रं
कल्याणमूर्तिमनघं शिवमाश्रयामः ॥३३॥

श्रीशिव उवाच ।

ब्रह्मविष्ण्वादयः सर्वे त्रिदिवेशा ब्रुवन्तु वः ।
कं कामं वितराम्यद्य किमर्थं यूयमागताः ॥३४॥

यो वो द्रुह्यात् स मे द्रुह्याद्यो वो ह्यनु स मामनु ।
यतः सर्वे भवन्तो हि विस्तृता मद्विभूतयः ॥३५॥

एतौ विधिहरी साक्षादहमेव न संशयः ।
अस्मासु त्रिषु यः पश्येद्भेदं नश्येत् स पामरः ॥३६॥

केन वा पीडिता यूयं मम प्राणा मुमूर्षणा ।
ब्रूत तं विनिषूदामि साक्षादन्तकमप्यहम् ॥३७॥

देवा ऊचुः ।

बाधन्तेऽस्मान् महादेव त्रिपुरेशसुता इमे ।
त्रयस्त्रयाणां लोकानामुच्छेदं कर्तुमुद्यताः ॥३८॥

अक्षोहिणीनां दशकं व्यूह्यास्मान् प्रत्युपागताः ।
तेभ्यो भीता वयं शम्भो त्वां वयं शरणागताः ॥३९॥

इति तेषां वचः श्रुत्वा भगवान् भूतभावनः ।
सेनान्यं प्राह मे सेना सज्जीभवतु मा चिरम् ॥४०॥

इति शम्भुवचः श्रुत्वा भेरीभाङ्कारमादिशत् ।
योगो योग इति प्रोच्चैर्भास्करस्योदयं प्रति ॥४१॥

सेनान्यैवं समादिष्टाः सौविदल्लास्त्वरान्विताः ।
प्रमथांश्चोदयामासुः सज्जत त्विति चासकृत् ॥४२॥

शैलादिनाऽपि त्वरया रथो हेमपरिष्कृतः ।
सूपस्करः शोभनाश्वः स्वक्षदण्डः सुचक्रयुक् ॥४३॥

सकूबरः सर्वसहः सर्वप्रहरणान्वितः ।
सुपताकः प्रावृषेण्यघनगम्भीरगर्जितः ॥४४॥

तर्जिताशेषभूगोलः समुच्छ्रितवृषध्वजः ।
सज्जीकृतः क्षणेनेव सर्वलक्षणलक्षितः ॥४५॥

उदितेऽर्के महादेवो रथमास्थाय शङ्करः ।
युद्धाय निर्ययौ देवः सेनान्या च स्वसेनया ॥४६॥

ततः शङ्खाश्च भेर्यश्च पणवानकडिण्डिमाः ।
सहसैवाभ्यहन्यन्त शतशोऽथ सहस्रशः ॥४७॥

प्रेम्णा च विकृताकारा विनन्दन्तो युयुत्सवः ।
नानावेषायुधधराः कम्पयन्तो धरां ययुः ॥४८॥

स्वसेनां देवसेनां च सेनानीः षण्मुखो बली ।
मयूरवाहनो व्यूह्य युद्धायाभिययौ पुनः ॥४९॥

बृहत्पिचण्डो बलवान् गणाधिपतिरुन्दुरुम् ।
युद्धायाभिययौ युक्तो निजया विघ्नसेनया ॥५०॥

घण्टाकर्णः शङ्कुकर्णः कुण्डोदरमहोदरौ ।
शूर्पकर्णः काकमुखः सिंहास्यो व्याघ्रतुण्डकः ॥५१॥

सूर्यवक्त्रश्चन्द्रवक्त्रः चतुर्वक्त्रश्चतुर्भुजः ।
चतुरङ्घ्रिश्चतुर्नेत्र इत्याद्याः कोटिशो गणाः ॥५२॥

नृत्यन्तश्च हसन्तश्च युद्धायाभिययुः पुरात् ।
तथैव दैत्यसेनाऽपि सन्नद्धा युद्धदुर्मदा ॥५३॥

व्यूढाऽसिलोम्ना सेनान्या गुप्ता युद्धाय निर्ययौ ।
यत्र शूरा महेष्वासा असुराः सुरशत्रवः ॥५४॥

अयःशिरा अश्वशिरास्त्रिशिरा द्विशिरा शठः ।
गजवक्त्रः काकमुखः कालतुण्डस्तु हुण्डकः ॥५५॥

सुरापोऽपद्युमांसाशी लोहदण्डस्त्रिलोचनः ।
माहिषो मखविध्वंसी सीरदंष्ट्रो रणप्रियः ॥५६॥

गृध्रकेतुः सिंहकेतुः सुकेतुः केतुमान् हली ।
जृम्भणः स्तम्भनः स्तम्भ इत्याद्या असुरेश्वराः ॥५७॥

विविधायुधवाहास्ते युद्धायाभिमुखा ययुः ।
देवानामसुराणां च चम्वावेवं समुद्यते ॥५८॥

रणाय महते क्रुद्धे परस्परजयोत्सुके ।
कथं तयोः संप्रहार आसीत् प्राणविनाशनः ॥५९॥

शृणुध्वं मुनयः सर्वे कथयिष्यामि तं हि वः ॥६०॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
नृसिंहदेवासुरयुद्धोद्योगो नामैकादशोऽध्यायः ॥

# ॥ अथ द्वादशोऽध्यायः ॥

सूत उवाच ।

तयोः समभवद्युद्धं सेनयो रोमहर्षणम् ।
नानावादित्रसङ्घुष्टं भीरूणां भयवर्धनम् ॥१॥

अश्ववारा अश्ववारै रथिनो रथिभिः सह ।
पत्तिभिः पत्तयश्चैव समापेतुर्यथायथम् ॥२॥

निर्मर्यादं महायुद्धं यमराष्ट्रविवर्धनम् ।
प्रावर्तत सुराणां चाऽसुराणां च परस्परम् ॥३॥

ततः शिवगणाः क्रुद्धा असुरान् शिवचोदिताः ।
निजघ्नुरसुरान् युद्धे शस्त्रैरुच्चावचैः शितैः ॥४॥

केषां चिद्वाहवश्छिन्नाश्छिन्नग्रीवास्तथाऽपरे ।
छिन्नवाहाश्छिन्नरथा निपेतुर्धरणीतले ॥५॥

रुधिरौघमहानद्यः सद्यस्तत्र विसुस्रुवुः ।
अश्वमीना रथावर्ता गजग्राहा ध्वजाहयः ॥६॥

साऽसुराणां शिवगणैर्वध्यमाना वरूथिनी ।
त्रातारं नाधिगच्छन्ती विद्रुता सर्वतो दिशः ॥७॥

असिलोमा ततः क्रुद्धः सेनानीर्दष्टदच्छदः ।
प्राहोच्चैः सारथिं याहि यत्रेमे शिवकिङ्कराः ॥८॥

यन्ता तदुपधार्योग्रं वाक्यं स्वस्वामिनस्तदा ।
अश्वान् सञ्चोदयामास यत्र सा शाम्भवी चमूः ॥९॥

आयान्तमसिलोमानं महत्याऽसुरसेनया ।
तं दृष्टवा प्रमथानीकं प्राद्रवद्यत्र षण्मुखः ॥१०॥

तान् विद्रुतान् समाश्वास्य गुहो योद्धुमुपस्थितः ।
मयूरं पर्वताकारं समारुह्य प्रतापवान् ॥११॥

असिलोमाऽथ सेनानीः सेनान्यं प्राह तं गुहम् ।
चिराद्दृष्टोऽसि रे स्कन्द युद्ध्यस्व पुरुषो भव ॥१२॥

सैनापत्यं कुमाराय प्रयच्छन्त्यबुधा बुधाः ।
योद्धव्यं किन्तु बालेन त्वया क्रौञ्चारिणा गुह ॥१३॥

घटस्व शौर्यमास्थाय माऽत्र कापुरुषो भव ।
इति तेनाऽसिलोम्नाऽऽजौ समाक्षिप्तः सुरारिणा ॥१४॥

गुहस्तमाह दुर्बुद्धे माऽऽत्मश्लाघां वृथा कृथाः ।
मा वाचा भव शूरस्त्वं क्रियया भव मे पुरः ॥१५॥

इति तस्य वचः श्रुत्वाऽसिलोमा क्रोधमूर्छितः ।
नाराचानां सहस्रेण सेनान्यं स समावृणोत् ॥१६॥

सेनानीरपि तं बाणैरसिलोमानमावृणोत् ।
कृते प्रतिकृतं कुर्वन् क्षिप्रकारी शिवात्मजः ॥१७॥

असिलोमाऽथ विव्याध मयूरं बहुभिः शरैः ।
स गाढविद्धो व्यथितो बभूव फणिभोजनः ॥१८॥

मयूरं व्यथितं दृष्ट्वा कुमारः क्रोधमूर्छितः ।
निशितेनाच्छिनत्तस्य सारथेरिषुणा शिरः ॥१९॥

चतुर्भिश्चतुरो वाहानच्छिनन्निशितैः शरै : ।
ध्वजं न्यपातयद्भूमौ रथं च तिलशोऽच्छिनत् ॥२०॥

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
शूलमुद्यम्य तरसा हन्तुं सेनान्यमद्रवत् ॥२१॥

तौ सेनान्यावुभौ युद्धमकुर्वातां परस्परम् ।
पदाती पादघातेन कम्पयन्तौ वसुन्धराम् ॥२२॥

देवाश्च दानवाश्चासन् विस्मिता युद्धवीक्षणात् ।
उभावपि प्रशंसन्तः साधु साध्वित्यवादिषुः ॥२३॥

असिलोम्नाऽथ शूलेन विभिन्नो हृदि षण्मुखः ।
मूर्छामवाप्य महती निपपात महीतले ॥२४॥

अस्मिन्निपतिते वीरे षण्मुखे भिन्नवक्षसि ।
हाहाकारो महानासीत् प्रमथानां समन्ततः ॥२५॥

असिलोमा जगर्जाऽजौ जितकाशी महोत्कटः ।
तस्मिन्नेव क्षणे स्कन्द उत्तस्थौ गतमूर्छितः ॥२६॥

शत्रुं पुरः समालोक्य गर्जन्तं जितकाशिनम् ।
गणानां क्रन्दितं श्रुत्वा जगामाल्पीयसी त्रपाम् ॥२७॥

आजुहाव ततः शत्रुमसिलोमानमग्निभूः ।
एहि युद्ध्य मया सार्धं मृत्युस्त्वां प्रत्युपस्थितः ॥२८॥

असिलोमा समाकर्ण्य तद्वाक्यं क्रोधमूर्छितः ।
आविध्य शूलं तरसा गुहं हन्तुमुपाद्रवत् ॥२९॥

अप्राप्तमेव तच्छूलं शक्त्या त्रेधाऽच्छिनद्गुहः ।
त्रोट्या तार्क्ष्यः स्वया काकोदरं त्रेधाऽच्छिनद्यथा ॥३०॥

छिन्नशूलः समुत्क्षिप्य शैलं दैत्यः प्रतापवान् ।
गुहे चिक्षेप रोषेण हतोऽसीत्यभ्यभाषत ॥३१॥

ततः प्रहस्य गाङ्गेयः शक्त्या गिरिमताडयत् ।
स गिरिः शकलीभूतः पपाताऽऽजौ दलन् रिपून् ॥३२॥

तस्मिन् गिरौ विदलिते मुष्टिमुद्यम्य दैत्यराट् ।
अभिदुद्राव वेगेन कार्तिकेयजिघांसया ॥३३॥

तमभ्याशगतं वीक्ष्य शक्तिमाविध्य षण्मुखः ।
चिक्षेप लक्ष्यीकृत्योरस्तस्य दैत्यचमूपतेः ॥३४॥

सा विनिर्भिद्य तस्योरः प्राणानादाय वेगतः ।
पुनः प्रत्याययौ हस्ते कार्तिकेयस्य तत् क्षणात् ॥३५॥

सेनान्या निहते तस्मिन्नसुराणां बलाधिके ।
आसुरी कान्दिशी सेना बभूवागतसाध्वसा ॥३६॥

अभिद्रुतायामासुर्यां सेनायां दैत्यपुङ्गवाः ।
अभिसस्रू रुषाऽऽविष्टाः प्रताड्य रणदुन्दुभीन् ॥३७॥

विद्युन्माली महादेवं हेममाली बिडौजसम् ।
समसज्जत रोषेण मेघमाली हरिं प्रति ॥३८॥

अन्ये सप्त दिशांपालाः स्वस्वसैन्यैः परीवृताः ।
अयःशिरोमुखैर्दैत्यैः समसज्जन्त संयुगे ॥३९॥

तद्युद्धमभवद्घोरं तुमुलं रोमहर्षणम् ।
प्रत्येकशो वर्णयितुमशक्यं मुनिसत्तमाः ॥४०॥

प्राधान्येन प्रवक्ष्यामि युद्धं शृणुत तापसाः ।
विद्युन्माली महादेवं निचखान शरैः शितैः ॥४१॥

महादेवोऽपि विव्याध विद्युन्मालिनमाहवे ।
तावुभावतिसंरब्धौ कृतप्रतिकृतैषिणौ ॥४२॥

युयुधाते महास्त्रैश्च विद्युन्मालिमहेश्वरौ ।
क्रोधसंरक्तनयनौ वीक्षन्तौ वृषभाविव ॥४३॥

पर्जन्यं पार्वतं सौरमाग्नेयं पर्वते तथा ।
वायव्यं भार्गवं रौद्रं ब्राह्मं सार्पं च मोहनम् ॥४४॥

इत्यादीनि महास्त्राणि दैत्यः प्रायुङ्क्त शङ्करे ।
शमयामास तान्यस्त्राण्यस्त्रैरेव त्रिलोचनः ॥४५॥

एवं विडौजसा सार्धं हेममाली युयोध ह ।
नानाविधैरस्त्रपूगैस्तैरस्त्रैस्तेन वासवः ॥४६॥

मेघमाली घनश्यामं विव्याध निशितैः शरैः ।
गरुत्मन्तं च विव्याध हसन्निव महासुरः ॥४७॥

वनमाल्यथ विव्याध मेघमलिनमाशुगैः ।
हसन्निव बभाषे तं मर्तुकामोऽसि रेऽसुर ॥४८॥

स तमूचे त्वमस्माकमसुराणां कुलान्तकः ।
त्वां निहत्यात्र समरे तेषां नाशं करोम्यहम् ॥४९॥

एवमाक्षिप्य दैत्येन्द्रो गदामाविध्य वेगतः ।
ताडयामास रोषेण वक्षोदेशे गदाधरम् ॥५०॥

सा गदा गदिनस्तस्य वक्षः प्राप्य व्यशीर्यत ।
विकिरन्ती विस्फुलिङ्गान्निपपात महीतले ॥५१॥

गदां विशीर्णामालोक्य दैत्यः प्रहरतां वरः ।
तोमरैस्ताडयामास युगपत्तार्क्ष्यमाधवौ ॥५२॥

वैनतेयस्ततः क्रोधादुड्डीय तरसा ध्रुवम् ।
दारयामास हृदये नखतुण्डप्रहारतः ॥५३॥

रथादाक्षिप्य तं भूमौ पातयित्वा स पक्षिराट् ।
पक्षाभ्यां वज्रकल्पाभ्यां भूयो भूम्यामताडयत् ॥५४॥

मूर्छागतं तमुत्क्षिप्य प्राक्षिपत् सैन्यमध्यतः ।
तत्सैन्यं प्राद्रवद्भीत्या तं निरीक्ष्य तथाऽऽगतम् ॥५५॥

तस्मिन्नेवान्तरे विष्णुर्हेममालिनमाहवे ।
चकार विरथं संख्ये सोपचक्राम दैत्यराट् ॥५६॥

महादेवोऽपि विज्ञाय तेषां स्म रणभूमिकाम् ।
तं दैत्यं पातयामास शूलेनाऽऽताड्य वक्षसि ॥५७॥

एतस्मिन्नन्तरे सेनामासुरीं भृशमाकुलाम् ।
दिक्पालाः प्रमथैः सार्धं ममर्दुर्जितकाशिनः ॥५८॥

अक्षौहिणीनामष्टानां विनाशः समभूत्तदा ।
विसस्रुः शतशो नद्यः सद्यः शोणितसम्भवाः ॥५९॥

द्वाभ्यामक्षौहिणीभ्यां ते विद्युन्मालिमुखास्तदा ।
आचक्रमुर्विष्णुपदं मायामास्थाय मायिनः ॥६०॥

स्थित्वा वियति ते दैत्या गर्जन्तो जलदा इव ।
ववर्षुः कीकसैरस्त्रैरश्मभिश्चापि भूरुहैः ॥६१॥

ततः सा देवसेनापि दिवमाचक्रमे जयात् ।
निघ्नन्ती दानवीं सेनां महादेवेन चोदिता ॥६२॥

एवं युद्धं प्रकुर्वाणा असुरा अमरैः सह ।
आकृष्टाः पूर्वसंस्कारैर्जग्मुः प्रीत्या क्रतुं प्रति ॥६३॥

ते संप्राप्य क्रतुपुरं विद्यन्माल्यादयस्त्रयः ।
जातिस्मरत्वं संप्राप्ताः पश्चात्तापं प्रपेदिरे ॥६४॥

विद्युन्माली मेघमाली हेममालीति ते त्रयः ।
विशस्त्रा विरथा भूत्वा शङ्करं शरणं ययुः ॥६५॥

दैत्या ऊचुः ।

प्रयत्नात् पाहि नः शम्भो दयालुत्वेन, सागसः ।
संप्राप्तानासुरं भावं पूर्वोपात्तेन कर्मणा ॥६६॥

महादेव उवाच ।

किमर्थं शरणं प्राप्ता बलवन्तो दुरासदाः ।
अश्लाघ्यमेतच्छूराणां यत्छत्रुं प्रति याचनम् ॥६७॥

विनाश्याक्षौहिणीरष्टौ निजप्राणपरीप्सया ।
यद्यूयं शरणं प्राप्ता नैष धर्मः सतां मतः ॥६८॥

दैत्या ऊचुः ।

वयं हि ब्राह्मणाः शम्भो पूर्वस्मिन् जन्मनि त्रयः ।
सोदर्या विष्णुभक्ताश्च शिवप्रद्वेषिणः सदा ॥६९॥

अस्मिन्नेव महाक्षेत्रे न्यवसाम पुरा वयम् ।
अद्राक्ष्म न कदाऽपीह त्रिकूटेश्वरमाग्रहात् ॥७०॥

तेन पापेन संप्राप्ता दारुणां योनिमासुरीम् ।
जातिस्मृतिं च संप्राप्ता विष्णुभक्तिप्रभावतः ॥७१॥

अतः परं महादेव प्रपन्नान् शाधि नः प्रभो ।
त्वद्दर्शितेन मार्गेण तरिष्यामो महार्णवम् ॥७२॥

श्रीमहादेव उवाच ।

इदमेव मया ज्ञात्वा कारणं दैत्यनन्दनाः ।
सम्प्रहारेऽपि तुमुले न कृतो भवतां वधः ॥७३॥

अहं च भगवान् विष्णुर्मायया भिन्नरूपिणौ ।
परमार्थदशायां तु नावयोर्विद्यते भिदा ॥७४॥

हरहर्योर्हि यो मोहात् भेदं पश्यति मन्दधीः ।
स आसाद्यासुरी योनिं ततो यात्यधमां गतिम् ॥७५॥

ममात्मा भगवान् विष्णुर्विष्णोरात्माहमीश्वरः ।
मन्मायामोहितधियस्तत्वमेतन्न जानते ॥७६॥

अतः परमिदं क्षेत्रं सेवनीयं निरन्तरम् ।
त्रिकूटेश्वरमाराध्य निवसध्वं यथासुखम् ॥७७॥

ब्रह्मविष्णुमहेशानां कूटशब्देन मेलनम् ।
लिङ्गेऽस्मिन्नस्ति तल्लिङ्गं त्रिकूटेश्वरसंज्ञितम् ॥७८॥

पूजयाऽस्य त्रिकूटस्य पूजिताः स्मो वयं त्रयः ॥
अवमानादस्य वयं त्रयोऽपि ह्यवमानिताः ॥७९॥

भवन्तो निवसन्त्वत्र शिवक्षेत्रेऽतिपावने ।
निरन्तरं पूजयन्तस्त्रिकूटेश्वरमादृताः ॥८०॥

इतो वर्षसहस्रान्ते क्षेत्रस्यास्य महासुराः ।
उपद्रवं करिष्यन्ति ममैव वरदर्पिताः ॥८१॥

ततस्तेषां विनाशाय क्रतुना ब्रह्मसूनुना ।
समेष्यति हरिः साक्षात् प्रार्थितो गन्धमादनात् ॥८२॥

तान् हनिष्यति पापिष्ठानसुरान् क्षेत्रकण्टकान् ।
त्रिकूटेशाज्ञया ब्रह्मा तं तत्र स्थापयिष्यति ॥८३॥

वीरनारायणं देवं दृष्ट्वा सम्पूज्य तं हरिम् ।
ततः पञ्चत्वमापन्ना मत्सायुज्यमवाप्स्यथ ॥८४॥

अस्य क्षेत्रस्य ये विघ्नं करिष्यन्त्यशुभाशयाः ।
तेषां समूलमुच्छेदं करिष्यामि न संशयः ॥८५॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां मदेकचित्तानां योगक्षेमं वहाम्यहम् ॥८६॥

मां द्विषन् यो हरिक्षेत्रे मत् क्षेत्रे यो हरिं द्विषन् ।
वसंस्तस्य विनश्यन्ति पुण्यानि च कुलानि च ॥८७॥

दाराः पुत्राः गृहं वित्तं पुण्यकीर्तिश्च सद्गतिः ।
विनश्यन्त्यचिरादेव सत्यं सत्यं वदाम्यहम् ॥८८॥

विष्णुस्तानाह दैत्येन्द्रान् मेघगम्भीरया गिरा ।
यदुक्तं पार्वतीशेन तत्सत्यं नात्र संशयः ॥८९॥

शिवं मां पश्यता भिन्नं विधेयो नेह संशयः ।
श्रद्धालुर्मोक्षमाप्नोति संशयात्मा विनश्यति ॥९०॥

सदा ममावतारेषु भजन्नेकतरं यथा ।
अन्येषु वर्तते तद्वच्छिवे वर्तेत मज्जनः ॥९१॥

तावेव प्राप्नुतो मोक्षं भेदज्ञो नरकं व्रजेत् ।
आवयोरन्तरं नास्ति सत्यं सत्यं न संशयः ॥९२॥

वामदेवो महायोगी क्षेत्रमेतत् समेष्यति ।
रहस्यमखिलं युष्मान् स सम्यगुपदेक्ष्यति ॥९३॥

इत्युक्त्वा तौ हरिहरौ सह शक्रादिभिः सुरैः ।
त्रिकूटेशं समालोक्य जग्मतुस्तौ यथागतम् ॥९४॥

विद्युन्माली हेममाली मेघमालीति ते त्रयः ।
मुक्तसङ्गाः क्रतुपुरे न्यवसन् गतमत्सराः ॥९५॥

अवशिष्टास्तु ये दैत्याः कामक्रोधपराः सदा ।
कालं निजं परीक्षन्तः पातालं विविशुस्तदा ॥९६॥

इत्येतत् कथितं विप्रास्त्रिकूटेशस्य वो मया ।
माहात्म्यं देवदेवस्य भूयः किं कथयानि वः ॥९७॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
सुरासुरसमरवर्णनं नाम द्वादशोऽध्यायः ॥

# ॥ अथ त्रयोदशोऽध्यायः ॥

ऋषय ऊचुः ।

वामदेवो महायोगी तस्मिन् क्षेत्रे तपोनिधिः ।
कानुद्दिश्य शिवज्ञानं प्रोक्तवान् सूत शंस नः ॥१॥

सूत उवाच ।

योऽनन्तमहिमा शम्भुर्भूतानां हितकृच्छिवः ।
वेदान्तवेद्यो विद्येशः सच्चिदानन्दविग्रहः ॥२॥

नित्यः शुद्धः शिवः स्थाणुः सर्वादिरचलोऽमलः ।
स एव भगवान् देवः सर्वभूतादिरव्ययः ॥३॥

जगद्विधानतत्त्वज्ञः प्रधानपुरुषेश्वरः ।
काले काले स भूतानि सृजत्यवति हन्त्यजः ॥४॥

सोऽसृजद्दक्षिणादङ्गाद्ब्रह्माणं लोकपावनम् ।
वामभगात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥५॥

हृदयादसृजद्धर्ममधर्मं चापि पृष्ठतः ।
भ्रूमध्यादसृजद्रुद्रं लोकनामप्ययाय च ॥६॥

स एवेदं ससर्जाग्रे स्वस्मिन्नेव स्वमायया ।
जगद्विचित्रनिर्माणं विचित्रस्थितिहेतुकम् ॥७॥

लोकान् स लोकपालांश्च निर्ममे जगतां
भूतानि भौतिकानर्थान् भोगानायतनानि च ॥८॥

नक्षत्राणि ग्रहान् योगान् कालभेदांश्च तस्य हि ।
भुव्यन्तरिक्षे पाताले पुण्यतीर्थान्यनेकशः ॥९॥

सप्तद्वीपान् पर्वतांश्च मेर्वादीन् कोटिशो नदीः ।
समुद्रान् सप्त मद्वीपान् क्षेत्राण्यायतनानि च ॥१०॥

पवित्रांश्च वनोद्देशान् देशान् नानाविधान् बहून् ।
भाषाश्च विविधा वर्णानाश्रमांश्च पृथग्विधान् ॥११॥

युगानि युगधर्माश्च तथा मन्वन्तराणि च ।
देवान् दैत्यान् राक्षसांश्च गन्धर्वाप्सिरसः खगान् ॥१२॥

विद्याधरोरगपशून् गुह्यकान् यक्षकिन्नरान् ।
उद्भिज्जं विविधाकारं पर्णानि विविधानि च ॥१३॥

एवं स्वमायया सृष्ट्वा जगत् स्थावरजङ्गमम् ।
तत्र क्रीडति सर्वात्मा बहुरूपी महेश्वरः ॥१४॥

स सर्वगोऽपि सर्वात्मा मूढैर्नैव हि दृश्यते ।
स समत्वेन सर्वत्र दृश्यते समदर्शिभिः ॥१५॥

वामदेवो महायोगी पश्यन्मायामयं जगत् ।
चरन् वायुरिवाऽसंग आयात् क्रतुपुरं मुनिः ॥१६॥

त्रिकूटेश्वरमालोक्य हुंहुं कृत्वा त्रिरुच्चकैः ।
निषसाद प्रसन्नात्मा स तस्मिन् रङ्गमण्डपे ॥१७॥

ऋषीणां महतां तत्र यतीनामूर्ध्वरेतसाम् ।
ज्ञानिनां च समाजोऽभूत् मारामारविवेकिनाम् ॥१८॥

विद्युन्माल्यादयस्तेऽपि पूर्वोक्ता असुरोत्तमाः ।
तेषां तत्रोपविष्टानां शुश्रूषूणा च भक्तित. ॥१९॥

तस्मिन् समाजे विप्रोऽभूत् सुमेधा नाम नामत. ।
स वामदेवं पप्रच्छ विनयावनतः सुधीः ॥२०॥

सुमेधा उवाच ।

भगवन् सत्यमाचारं वक्तुमर्हसि सत्तम ! ।
आचारः प्रथमो धर्मो धर्म आचार लक्षणः ॥२१॥

वामदेव उवाच ।

आचारहीन न पुनंति वेदा
यद्यप्यधीता कुशलाः सहर्षयः ।
छन्दांस्येनं प्रजहत्यन्तकाले
नीडं शकुन्ता इव जातपक्षाः ॥२२॥

इति पृष्टो वामदेवस्तेन तत्र सुमेधसा ।
प्रतिनन्द्य वचस्तस्य वक्तुं समुपचक्रमे ॥२३॥

आचारस्तेज आधत्ते आचारो हन्त्यलक्षणम् ।
आचारस्तनुते कीर्तिमाचारात् किं न लक्ष्यते ॥२४॥

आचारहीनः पुरुषः सत्सु मानं न विन्दते ।
नास्य श्रद्दधते वाचं जना धर्मपरायणाः ॥२५॥

देशाचाराः कुलाचारा ये महद्भिरुपासिताः ।
ते ह्यवश्यमनुष्ठेया यथादेशं यथाकुलम् ॥२६॥

अत्याचारो न कर्तव्यस्त्वनाचारो न कर्हिचित् ।
श्रेष्ठैराचर्यते यद्यत्तदाचर्यं बुभूषता ॥२७॥

बाह्यमाभ्यंतरं शौचं द्विविधं परीकीर्तितम् ।
मृजज्जलाभ्यां भवेद्बाह्यं भावशुध्द्या तथान्तरम् ॥२८॥

उड्डीयन्ते यथाऽऽकाशे पक्षाभ्यामेव पक्षिणः ।
तथा द्वाभ्यां हि शौचाभ्यां गाहन्ते ब्रह्मणि द्विजाः ॥२९॥

स्नानं जपस्तपो होम उपवासः शिवार्चनम् ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥३०॥

शूद्रान्नं सूतकान्नं च संस्कारान्नं न जातुचित् ।
भुञ्जीत मतिमान् तद्वद्दुरन्नानि च सर्वशः ॥३१॥

सदा परान्नभोजी यस्तेन यद्यत्कृतं भवेत् ।
तत्सर्वमन्नदातुः स्यात् सुकृतं नात्र संशयः ॥३२॥

पञ्चयज्ञानकृत्वा यो भुङ्क्तेऽन्नमुदरम्भरिः ।
किं तेन न कृतं पाप चोरेण मखलोपिना ॥३३॥

विधाय पञ्चयज्ञान् यो विघसाशी भवेद्द्विजः ।
तस्मै देवाः प्रसीदन्ति ददत्यन्नं चतुष्फलम् ॥३४॥

नान्नदानात् परं दानं न गायत्र्याः परो मनुः ।
नाऽहिंसायाः परो धर्मो नाऽनृतात् पातकं परम् ॥३५॥

असत्यं साहसं द्वेषं मात्सर्य परपीडनम् ।
धर्मध्वजित्वं शाठ्यं च दूरतः परिवर्जयेत् ॥३६॥

पैशून्यं पारदार्यं च चौर्यं दौःशील्यमुग्रताम् ।
देहाभिमानं निन्दां च परेषां परिवर्जयेत् ॥३७॥

दुर्विवादं दुराचारं दुरन्नं दुष्प्रतिग्रहम् ।
दुराग्रहं च दुःसङ्गं दूरतः परिवर्जयेत् ॥३८॥

न स्याज्ज्ञात्वभिनिर्मुक्तो न स्यादभ्युदितः सदा ।
प्रातःसन्ध्यापरो नित्यं स एव ब्राह्मणः स्मृतः ॥३९॥

प्रातःस्नाने ह्यशक्तश्चेत् मन्त्रस्नानं समाचरेत् ।
तद्विधिं श्रुणु वक्ष्यामि येन शुद्धो भवेद्द्विजः ॥४०॥

विसृज्य मलमूत्रं च त्रिर्मृदा शोधयेद्गुदम् ।
सकृदेव मृदा वापि कुर्याच्छौचमतन्द्रितः ॥४१॥

सप्तवारं मृदा वामपाणिं प्रक्षाल्य पादयोः ।
त्रिवारं मृत्तिकाशौचं कुर्यात् पाण्योस्तथा पुनः ॥४२॥

एवं शौचं विधायाऽथ दन्तधावनमाचरेत् ।
मुखं प्रक्षाल्य गात्राणि प्रमृज्यार्द्रेण वाससा ॥४३॥

धौतवासः परीधाय तत आचम्य वाग्यतः ।
आपोहिष्ठेति सूक्तेन मन्त्रस्नानं समाचरेत् ॥४४॥

पादयोर्मूर्ध्नि हृदये मस्तके हृदि पादयोः ।
हृदये पादयोर्मूर्ध्नि हृदंघ्र्योर्मूर्ध्नि मार्जनम् ॥४५॥

मस्तके हृदयेंऽघ्र्योश्च हृदंघ्र्योर्मूर्ध्नि मार्जनम् ।
इदमर्धर्चशः प्रोक्तं देहपावित्र्यकारकम् ॥४६॥

हृदये पादयोर्मूर्ध्नि ऋक्शो मार्जनमीरितम् ।
उक्तेषु मार्जनेष्वेषु पठेदोङ्कारमादितः ॥४७॥

गायत्र्या दशकृत्वाऽम्बु प्राश्नीयादभिमन्त्रितम् ।
द्विराचामेत्ततो मन्त्रस्नानमेतदुदीरितम् ॥४८॥

स्नानमेतदशक्तस्तु कृत्वा सन्ध्यां समाचरेत् ।
शक्तस्तु वारुणं स्नानं कुर्यादेव न संशयः ॥४९॥

पूर्वोक्तविधिना स्नात्वा बहिरागत्य शुद्धधीः ।
सुधौतं सदशं श्वेतं परिदध्यात् सदंशुकम् ॥५०॥

आसने चोपविश्याऽथ प्राङ्मुखो वाप्युदङ्मुखः ।
अन्तर्जानुकरो भूत्वा द्विराचमनमाचरेत् ॥५१॥

शुद्धं भस्म समादाय सद्योजातादिपञ्चभिः ।
अग्निरित्यादिभिर्मन्त्रैः सम्यक्तदभिमन्त्रयेत् ॥५२॥

मानस्तोकेन च जलं दत्वा संमर्दयेत्ततः ।
त्रियंबकेतिमन्त्रेण शिरो लिम्पेदतन्द्रितः ॥५३॥

त्रियायुषादिभिर्मन्त्रैर्ललाटे च भुजद्वये ।
स्कन्धे गले च हृदये नाभौ कूर्परयोस्तथा ॥५४॥

मणिवन्धे च पृष्ठे च कर्णयोरनुलिम्पयेत् ।
सर्वाङ्गोद्धूलनं प्रोक्तं यतीनां च विरागिणाम् ॥५५॥

प्रदेशिन्यादितिसृभिरङ्गुलीभिर्विलेपयेत् ।
तिस्रो रेखा भवन्त्येषु स्थानेषु मुनिपुङ्गवाः ॥५६॥

मध्यमानामिकाभ्यां द्वे मध्ये च प्रतिलोमतः ।
अङ्गुष्ठेन तृतीया स्यात् त्रिपुंड्रः सोऽभिधीयते ॥५७॥

तिसृणां मन्त्ररेखाणां प्रत्येकं नव देवताः ।
अकारो गार्हपत्याग्निर्भूमिश्चात्मरजोगुणः ॥५८॥

ऋग्वेदश्च क्रियाशक्तिः प्रातःसवनमेव च ।
महादेवश्च रेखायाः प्रथमायाश्च देवताः ॥५९॥

उकारो दक्षिणाग्निश्च नभः सत्त्वं यजुस्तथा ।
मध्यन्दिनं च सवनमिच्छाशक्त्यन्तरात्मकौ ॥६०॥

महेश्वरश्च रेखाया द्वितियायाश्च देवताः ।
मकाराहवनीयौ च परमात्मा तमोदिवौ ॥६१॥

ज्ञानशक्तिः सामवेदस्तृतीयं सवन तथा ।
शिवश्चेति तृतीयाया रेखायाश्चाधिदेवताः ॥६२॥

आदावेता देवतास्तु स्मृत्वा नत्वा च भक्तितः ।
त्रिपुण्ड्रं धारयेद्यस्तु स साक्षाच्छिव उच्यते ॥६३॥

त्रिपुण्ड्रधारण विप्राः प्राणमन्त्रैर्यथाविधि ।
त्रैवर्णिकानां नियतमन्येपा तदमन्त्रकम् ॥६४॥

त्रिपुण्ड्रं कुरुते यस्तु भस्मना विधिपूर्वकम् ।
ब्रह्मचारी गृहस्थो वानप्रस्थो यतिरेवच ॥६५॥

महापातकसङ्घातैर्मुच्यते चोपपातकैः ।
ग्रहास्तं नोपसर्पन्ति न पिशाचा न राक्षसाः ॥६६॥

सर्वदेवमयी तस्य सर्वतीर्थमयी तनुः ।
भसितं यस्य भालेऽस्ति मोक्षश्रीहसितं हितम् ॥६७॥

ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं च यो भाले धारयेद्विजः ।
मुने स एव विज्ञेयो हरिश्च हर एव च ॥६८॥

त्रिपुण्ड्रधारणं दृष्टवा ज्वलितं यस्य मानसम् ।
स मुने नरकं याति दशपूर्वैर्दशापरैः ॥६९॥

भालं त्रिपुण्ड्रधवलं रुद्राक्षं यस्य कङ्कणः ।
हृदि शम्भुर्मुखे नाम स साक्षाच्छिव उच्यते ॥७०॥

यस्योर्ध्वपुण्ड्रयुग्भालं कमलाक्ष उरस्थले ।
हृदि विष्णुर्मुखे नाम स साक्षाद्धरिरेव हि ॥७१॥

तुलसीकाष्ठमाला च तुलसीदलभक्षणम् ।
शूद्रादीनामयं धर्मस्तप्तमुद्राङ्कनं तथा ॥७२॥

गङ्गायमुनयो रोधावन्योन्यं मिलितौ यथा ।
तथा यावैकमत्यौ तौ ज्ञेयौ श्रीशैववैष्णवौ ॥७३॥

आखुमार्जारवद्यत्र द्वेषिणौ शैववैष्णवौ ।
तद्राष्ट्रं नाशमाप्नोति तावुभावपि नश्यतः ॥७४॥

तयोः सन्दर्शनादन्ये पापिनोऽपि पुनन्ति हि ।
तद्राष्ट्रं क्षेममाप्नोति यत्र सच्छैववैष्णवौ ॥७५॥

हरिं हरं विधातारं यः पश्येदेकरूपिणम् ।
स एव शास्त्रं जानाति भेददृग् यः स पामरः ॥७६॥

सर्वोत्तमो नेश ईश ईशः श्रेष्ठो न माधवः ।
इति चिन्तयतोर्नैव पापिनोरस्ति सद्गतिः ॥७७॥

सगुणालम्बनं कार्यं मनःस्थैर्याय साधकैः ।
वैष्णवं वाऽस्तु शैवं वा कोऽटिर्नात्र दुराग्रह. ।।७८।।

इत्येतत् कथितं तुभ्यं रहस्यं वैदिकं मया ।
अयमेव सदाचारो दुराचारो ह्यतोऽन्यथा ।।७९।।

वामदेव उवाच ।

कच्चिदेतच्छ्रुतं दैत्या युष्माभिर्मुक्तिमीप्सुभिः ।
कच्चिदज्ञानसंमोहः प्रणष्टो वश्चिराश्रितः ।।८०।।

दैत्या ऊचुः ।

नष्टो मोह. स्मृतिर्लब्धा त्वत्प्रसादान्महामुने ।
स्थिताःस्मो गतसन्देहाः करिष्यामो वचस्तव ।।८१।।

वामदेव उवाच ।

मुने सुमेध एतत्ते कथितं धर्मलक्षणम् ।
रहस्यं सर्वशास्त्राणां किं भूयः श्रोतुमिच्छसि ।।८२।।

।। इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
धर्मलक्षणकथनं नाम त्रयोदशोऽध्यायः ।।

# ॥ अथ चतुर्दशोऽध्यायः ॥

सुमेधा उवाच ।

श्रुतमेतत्त्वया प्रोक्तं सदाचारस्य लक्षणम् ।
इदानी श्रोतुमिच्छामि तत्त्वज्ञानं प्रशाधि माम् ॥१॥

वामदेव उवाच ।

मुने सुमेधः पृष्टं ते यदेतज्ज्ञानमुत्तमम् ।
श्रोतव्यस्य समग्रस्य समाप्तिर्यत्र जायते ॥२॥

तत्तुभ्यं संप्रवक्ष्यामि समाहितमनाः शृणु ।
एतस्य वत्स ज्ञानस्य वक्ता श्रोता च दुर्लभः ॥३॥

बहूनां जन्मनां विप्र ! साधनाभ्यासपाकतः ।
अन्ते विविदिषा ज्ञाने जायते सुविरागतः ॥४॥

मयाऽनुभूता आयस्य कोटिशो हि पुरः पुरा ।
नानाविधा दुर्विभेद्या दुर्जेया अकृतात्मभिः ॥५॥

मनुरासं सूर्य आसं कक्षीवानभवं मुनिः ।
नानाविधानां देवानां जन्मान्यद्राक्षमप्यहम् ॥६॥

एकेनानुगृहीतोऽहं केनचित् सुमहात्मना ।
प्रतिबुद्धः प्रपश्यामि विश्वं मय्येव कल्पितम् ॥७॥

स्मारं स्मारमहं तानि दुःस्वप्नरचितानि तु ।
जन्मानि विस्मयं यामि समाधेरुत्थितः क्षणम् ॥८॥

सुमेधा उवाच ।

भगवन्नवधार्येदं तव वाक्यं महार्थवत् ।
तत्त्वज्ञाने निराशोऽस्मि मादृशस्तत्र का गतिः ॥९॥

यथा व्योम्नि न गाहेत सर्वथाऽजातपक्षकः ।
तथा ब्रह्मण्यनिर्देश्ये संसारी मादृशः क्वचित् ॥१०॥

यश्च मूढतमो लोके यश्च बुद्धेः परंगतः ।
द्वावेतौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥११॥

दयां कुरु महाभाग त्वामहं शरणं गतः ।
संसारदुःखजलधेर्मामुद्धर्तुं त्वमर्हसि ॥१२॥

वामदेव उवाच ।

अधिकार्यसि मा भैषीर्निर्विण्णोऽसि महामते ।
उपदेक्ष्यामि ते ज्ञानं येन प्राप्स्यसि निर्वृतिम् ॥१३॥

आत्माऽव्ययः स्वतः सिद्धः शुद्धो बुद्धः सनातनः ।
निरञ्जनो निर्विकल्पः सच्चिदानन्दलक्षणः ॥१४॥

अनादिमायाकार्यस्य जगतोऽस्याश्रयः परः ।
देशकालानवच्छिन्नो हीनः स्वगतभेदतः ॥१५॥

माययेश्वरतां प्राप्तोऽविद्यया जीवतां गतः ।
तूलाविद्याबहुत्वेन जीवाश्च बहवोऽभवन् ॥१६॥

प्रवाहोऽयमनादिस्तु न कदाचिदनीदृशः ।
ऊर्ध्वमूलमधःशाखमितीदं प्रभुरव्ययः ॥१७॥

महत्तत्त्वमहङ्कारो महाभूतानि षोडश ।
एवं ह्यमी विकाराश्च लिङ्गमेतत्कृतं वपुः ॥१८॥

एतैरेव वपुः स्थूलं पञ्चीकरणतां गतैः ।
जायते विविधं तच्च षड्विकारि षडूर्मि तत् ॥१९॥

आमोक्षव्यापि लिङ्गाख्यं वपुस्तद्वासनामयम् ।
जीवोपाधिरिति प्रोक्तं तद्भङ्गो मोक्ष उच्यते ॥२०॥

अनादिर्लिङ्गदेहानि तस्माज्जीवा अनादयः ।
मायाऽनादिर्यतस्तस्मादनादिः परमेश्वरः ॥२१॥

कार्योपाधिरयं जीव कारणोपाधिरीश्वरः ।
अविद्यायास्तु कार्यत्व गौणमित्येव निर्णयः ॥२२॥

लिङ्गदेहाभिमानो यः सोऽविद्याग्रन्थिरुच्यते ।
लिङ्गदेहाभिमानेन जीवो दुःखान्युपाश्नुते ॥२३॥

जीवे ह्यब्रह्मताभ्रांतिर्ब्रह्मपारोक्ष्यविभ्रमः ।
निवयारयति शास्त्रेण गुरुरेतद् भ्रमद्वयम् ॥२४॥

एतद्ब्रह्मद्वयं यावत्तावज्जीवस्य जीवता ।
यावज्जीवस्य जीवत्वं तावत्संसारबन्धनम् ॥२५॥

आकाशस्य यथाभेदस्त्रिविधो दृश्यते जनैः ।
महाकाशो मठाकाशो घटाकाश इति स्मृतः ॥२६॥

एवं विशुद्धचैतन्यमीशो जीव इति त्रिधा ।
ब्रह्मणो दृश्यते भेद उपाधिः परिकल्पितः ॥२७॥

यथैकस्मिन् मठाकाशे घटाकाशा अनेकशः ।
मठाकाशो घटाकाशांस्तान् सर्वान् व्याप्य तिष्ठति ॥२८॥

तांश्च सर्वान् घटाकाशान् मठाकाशं च तं यथा ।
अभिव्याप्य महाकाशोऽनवच्छिन्नो हि तिष्ठति ॥२९॥

एवं जीवानभिव्याप्य वर्तते परमेश्वरः ।
तमीश्वरमभिव्याप्य वर्तते ब्रह्म निष्कलम् ॥३०॥

अथैकस्मिन् घटे नष्टे नष्टमाकाशयोर्द्वयम् ।
अनवच्छिन्न आकाशः पूर्ण एवावशिष्यते ॥३१॥

अन्ये तथैव तिष्ठन्ति जीवा लिङ्गवशानुगाः ।
मठाकाशे घटाकाशा यथा तिष्ठन्ति चाऽपरे ॥३२॥

यथा स्वलिङ्गभङ्गेषु भग्नो जीवेश्वरावुभौ ।
एकमेवाऽद्वितीयं यत्तद्ब्रह्मैवावशिष्यते ॥३३॥

निःशेषवासनाहानिर्लिङ्गभङ्गः स उच्यते ।
ध्यानमेव सदा कार्यं लिङ्गभङ्गमभीप्सुना ॥३४॥

विरोधिनीनां वृत्तीनां कृत्वा निःशेषतः क्षयम् ।
ब्रह्मैकाकारवृत्तिर्या धारणा ध्यानशुद्धितः ॥३५॥

ध्यानं तु पक्वतां प्राप्तं समाधिरभिधीयते ।
सविकल्पविकल्पाभ्यां स द्विधा परिकीर्तित. ॥३६॥

ध्याता ध्येयं तथा ध्यानं यत्रेदं त्रितय स्फुरेत् ।
सविकल्पः स विज्ञेयस्तन्नाशे निर्विकल्पकः ॥३७॥

विविक्तभाङ्मिताहारी जितसर्वेन्द्रियासनः ।
ध्यायेद्ब्रह्माहमस्मीति पञ्चकोशातिगो मुनिः ॥३८॥

अयमन्नमयः कोशो जडो दृश्यो विकारवान् ।
नाहं यतोऽस्य साक्षीशो निर्विकारोऽस्मि चेतनः ॥३९॥

कोशः प्राणमयो नाहं वायुभेदो विकारवान् ।
प्राणो मदीय इत्यस्य साक्षित्वेन व्यवस्थितः ॥४०॥

मनोमयोऽपि कोशो यः कामक्रोधादिमांश्चलः ।
शोकमोहादिमांस्तस्य साक्षी नाहं तदात्मकः ॥४१॥

यस्य तादात्म्यमापन्नः कर्माणि तनुयामहम् ।
स विज्ञानमयः कोशो नाहं साक्षी यतः पृथक् ॥४२॥

अन्तःकरणवृत्त्यात्मा योऽहङ्कारः सुषुप्तिगः ।
स आनन्दमयः कोशो नाहं साक्षी यतः पृथक् ॥४३॥

अमीषां पञ्चकोशानामधिष्ठानमबाधितम् ।
यद्ब्रह्मपुच्छमित्युक्तं परिपूर्णं तदस्म्यहम् ॥४४॥

इदं प्रपञ्चवैचित्र्यं न मां मोहयितुं क्षमम् ।
सर्वं मायामयं तुच्छमित्यवेत्य गतस्मयम् ॥४५॥

नष्टो मायामयः स्वप्नो येनाऽहं जीवतामगाम् ।
अधुनाऽहं प्रपश्यामि मां चिदानन्दविग्रहम् ॥४६॥

मय्येवानन्दजलधावेते ब्रह्माण्डबुद्बुदाः ।
उद्भवन्ति लयं यान्ति निर्विकारोऽहमन्वहम् ॥४७॥

नित्योऽहं निर्विकारोऽहं निःसङ्गोऽहं निराश्रयः ।
पूर्णोऽहं बोधरूपोऽहं स्वप्रकाशोऽहमीश्वरः ॥४८॥

मदीयमिदमित्येवं यावत्पश्याम्यहं जगत् ।
तावन्मय्येव मामेव पश्याम्यात्मानमद्वयम् ॥४९॥

यः सहस्रं सहस्राणां पक्षानाहृत्य सम्पतेत् ।
नान्तं गच्छेत् कारणस्य यस्य साक्षात्तदस्म्यहम् ॥५०॥

गतं मे जीवतारूपं दारिद्र्यं दुःखभाजनम् ।
सम्प्राप्तं निजसाम्राज्यं चिरं गुप्तमिवस्थितम् ॥५१॥

निवृत्तस्येव मोहस्य निवृत्तिर्गुरुणा कृता ।
प्राप्तस्यैव च मे प्राप्तिरहो गुरुरहो गुरुः ॥५२॥

गुरुप्रसादाज्जातोऽस्मि गुरूणामप्यहं गुरुः ।
यत्प्रापणीयं तत्प्राप्तं कृतकृत्योऽस्मि निर्वृतः ॥५३॥

इति ध्यायन् चिरं ब्रह्मन् निजानन्दपरिप्लुतः ।
समाधेरुत्थितो भैक्षं चरेत् संपालयन् मुहुः ॥५४॥

यथाण्डजाः कणलोभेन यान्ति
गृहाङ्गणं गृहिणां शङ्कमानाः ।
कणान् लब्ध्वा त्वरया संप्रयन्ति
तथा भैक्षं यश्चरेदात्मवित् सः ॥५५॥

मौनं मानपरित्यागो विरागैकान्तशीलने ।
ध्यानं माहात्म्यगुप्तिश्च षडेते मोक्षहेतवः ॥५६॥

ज्ञानाद्विनश्यतः कार्त्स्न्यात् विप्र पूर्वोत्तरे अघे ।
भोगेन क्षपयित्वाऽन्यद्ब्रह्मभूयमवाप्नुयात् ॥५७॥

आदेहपातमारब्धं कर्मज्ञानवतामपि ।
स्वस्वकाले ददात्येव दुःखानि च सुखानि च ॥५८॥

सुमेधा उवाच ।

भगवान् विश्वमध्यस्तं परब्रह्मणि तत्कथम् ।
जायतेऽर्थक्रियाकारी मह्यमाचक्ष्व पृच्छते ॥५९॥

वामदेव उवाच ।

रज्जुसर्पादयो यद्वदसन्तोऽप्यर्थकारिणः ।
एवं देहादयो भावा ह्यसन्तोऽप्यर्थकारिणः ॥६०॥

तान् विजेतुं सदा कार्यः समाधिर्ब्रह्मवित्तमैः ।
व्युत्थाने द्वन्द्वमखिलमपनेयात् तितिक्षया ॥६१॥

दृष्टेन्द्रजाला जायन्ते मूढा हास्यवशा यथा ।
तथा प्राज्ञा न जायन्ते तस्य मिथ्यात्वनिश्चयात् ॥६२॥

अज्ञो देहाभिमानेन मन्वानो विश्वसत्यताम् ।
यथा क्लेशानवाप्नोति न तथा परमार्थदृक् ॥६३॥

तस्माद्देहाद्वयाध्यासं प्रजहीहि महामते ।
चिन्तयात्मानमद्वैतं भूयः कल्पयसेऽध्वने ॥६४॥

मा काङ्क्षीर्मरणं विप्र काङ्क्षीस्त्वं मा च जीवितम् ।
तद्द्वयं यस्य तन्मिथ्यात्वं भवाप्ययवर्जितः ॥६५॥

इमानि सर्वभूतानि जिह्वोपस्थवशानि हि ।
तयोर्विरक्तो यो धीरः स एव ब्रह्मवित्तमः ॥६६॥

शास्त्रवादेषु निपुणः पाण्डित्याभिनिविष्टधीः ।
न स ब्रह्म विजानाति दर्वी पाकरसं यथा ॥६७॥

नानुध्यायेद्बहूञ्छब्दान् वाचो विग्लपनं हि तत् ।
तस्मान्निर्विद्य पाण्डित्यं ब्रह्मसंस्थो भवेन्मुनिः ॥६८॥

अपि यः सगुणोपास्तौ भेददृक् स पशुः श्रुतः ।
किं पुनर्निर्गुणे ब्रह्मण्यद्वये यस्तु भेददृक् ॥६९॥

अद्वितीयं ब्रह्म सत्यं जगत्तत्र मरीचिका ।
''मायामात्रमिदं द्वैत'' मित्यादिश्रुतिमानत. ॥७०॥

उद्भवन्ति विवेकेन विप्र विप्रतिपत्तयः ।
अतस्तासां निरासाय जायते शास्त्रविस्तरः ॥७१॥

अनेकजन्मसिद्धानां शुद्धानामधिकारिणाम् ।
श्लोकेन च तदर्धेन स्वात्मबोधः प्रजायते ॥७२॥

आगोपालाविपालेभ्यः सर्वे भेदेऽधिकारिणः ।
अभेदे त्वधिकारी तु स महात्मा सुदुर्लभः ॥७३॥

लौकिकेन प्रमाणेन सिद्धां त्यक्त्वाऽभिमानिताम् ।
वेदान्तैरनुभूत्या च सिद्धमद्वैतमाश्रय ॥७४॥

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
ब्रह्मैक्यभावनोद्भूतामनुभूतिं सुखात्मिकाम् ॥७५॥

बहिर्मुखेषु मा सौम्य सर्वथा प्रकटीकुरु ।
ब्रह्म सत्यं जगन्मिथ्या मिथ्या जीवेशयोर्भिदा ॥७६।

इत्यृषिर्वामदेवस्तमनुशास्य सुमेधसम् ।
तेन सम्पूजितो भक्त्या तत्रैवादृश्यतां ययौ ॥७७॥

उपधार्यात्मविज्ञानं वामदेवान्महागुरोः ।
सुमेधाः कृतकृत्योऽभूद्ब्रह्माहमिति भावयन् ॥७८॥

सूत उवाच ।

वामदेवीमिमां गीतां यः पठेद्भक्तिमान् पुमान् ।
तदर्थं भावयेन्नित्यं स मोक्षं प्राप्नुयाद्ध्रुवम् ॥७९॥

इदं वो वामदेवीयं सद्यः प्रत्ययकारकम् ।
आध्यात्मशास्त्रं कथितं किं भूयः श्रोतुमिच्छथ ॥८०॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
वामदेवगीता नाम चतुर्दशोऽध्यायः ॥

# ॥ अथ पञ्चदशोऽध्यायः ॥

ऋषय ऊचुः ।

तस्मिन् क्रतुपुरे पुण्ये कानि तीर्थानि सन्ति वै ।
तानि नः सूत सर्वाणि त्वमाचक्ष्व महामते ॥१॥

सूत उवाच ।

स एकदा ब्रह्मपुत्रः क्रतुः क्रतुमतां वरः ।
इच्छन् क्षेत्रस्य माहात्म्यमधिकं तीर्थयोगतः ॥२॥

उर्ध्वबाहुर्निराहारः स्थाणुभूतः स्थितः समाः ।
एकपादः स्थितस्तेपे स तपस्तपतां वरः ॥३॥

अतिप्रवृद्धे तपसि तस्यैकमनसः क्रतोः ।
आगतास्तत्र सर्वेऽपि देवा ऋषिगणैः सह ॥४॥

गन्धर्वा उरगाः सिद्धाः किन्नरा गुह्यकास्तथा ।
यक्षा विद्याधराश्चाऽपि सर्वा अप्सरसोऽपि च ॥५॥

एवं समाजे संवृत्ते ब्रह्मा लोकपितामहः ।
क्रतुं प्रबोधयामास समाधिस्थं तपोनिधिम् ॥६॥

चिरादुन्मील्य नयने यदा क्रतुरवैक्षत ।
तदा ददर्श ब्रह्माणं हरिं च गिरिजापतिम् ॥७॥

भृग्वादीनात्मनो बन्धून् ननाम भुवि दण्डवत् ।
क्रतो ! शीघ्रं समुत्तिष्ठेत्याह ब्रह्मा त्रिरुच्चकैः ॥८॥

तदोत्थाय क्रतुः प्रह्वस्तस्यावग्रे कृताञ्जलिः ।
कमलासनपादाब्जमिलल्लोचनषट्पदः ॥९॥

तं दृष्ट्वा तपसा श्रान्तं निजमात्मजमात्मभूः ।
उवाच वत्स! प्रीतोऽस्मि वरं वरय काङ्क्षितम् ॥१०॥

क्रतुरुवाच ।

अध्युष्टकोटितीर्थानि यानि सन्ति जगत्त्रये ।
तान्यत्राऽऽयान्तु सर्वाणि मकरस्थे दिवाकरे ॥११॥

यावन्मकरगो भानुस्तावत्तिष्ठन्तु तान्यज ।
अस्मिन् क्रतुपुरे स्वं स्वं यच्छन्तु स्नानजं फलम् ॥१२॥

वीरनारायणस्याऽस्य समन्तात् क्रोशमात्रकम् ।
वसन्तु सर्वतीर्थानि वापीकूपादिषु प्रभो ! ॥१३॥

मकरस्थे रवौ प्राप्ते प्राणिनो यत्र यत्र हि ।
मज्जन्ति प्राणिनां तेषां नश्यन्त्वेनांसि सर्वशः ॥१४॥

येऽत्र स्नानं च दानं च तर्पणं विप्रभोजनम् ।
जप होमादिकं कुर्युस्तदक्षय्यं भवत्वज ॥१५॥

एतच्छ्रुत्वा तु वचनं क्रतोर्लोकहितैषिणः ।
ब्रह्मा विष्णुश्च रुद्रश्च तथास्त्वित्यब्रुवंस्त्रयः ॥१६॥

क्रतो धन्योऽसि धन्योऽसि त्वया लोकहितेप्सुना ।
तपस्तप्तं वरो लब्धः कृतं च क्षेत्रमुत्तमम् ॥१७॥

त एव धन्या लोका ये परार्थैकप्रयोजनाः ।
ते भूमेर्भारभूता हि ये कुक्षिम्भरयो जनाः ॥१८॥

इत्युक्त्वा क्रतुमामन्त्र्य ब्रह्मविष्णुशिवादयः ।
क्रतुं स्तुवन्तः प्रययुः स्वं स्वं लोकं दिवौकसः ॥१९॥

सूत उवाच ।

गतेषु तेषु देवेषु क्रतुस्तोषान्ननर्त ह ।
वीरनारायणस्याऽयं महिमेति ब्रुवन् मुहुः ॥२०॥

तस्मिन् क्रतौ नृत्यति पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता ।
उच्चैरभाणीदशरीरवाणी
प्रोक्तं त्वया सत्यमिति त्रिरुच्चैः ॥२१॥

माहात्म्यमाकर्ण्य जना जनेभ्यो जनाः समापेतुरतीव हृष्टाः।
समागते माकरभास्करे तु बभूव यात्रा महती सुपुण्या
॥२२॥

कोनेरिकुण्डस्य समन्ततोऽन्ये केचित् त्रिकूटेश्वरसन्निकर्षे ।
यथावकाशं न्यवसंश्च केचित् क्रतोः पुरे पुण्यतमे पृथिव्याम्
॥२३॥

कूपाननेकान् प्रविधाय तेषु
सस्नुर्जनास्तीर्थजलेषु हृष्टाः ।
सन्तर्पयन्तः स्वपितॄन् सुरांश्च
यावद्विवस्वान् मकरे स्थितोऽभूत् ॥२४॥

ते गुप्तगामिन्युपकण्ठमेत्य
चक्रुर्जना अन्धुशतं हि केचित् ।
स्नानानि दानानि जपांश्च होमा-
निष्टीरकुर्वंश्च यथाधिकारम् ॥२५॥

अकुर्वताऽन्ये बहुदक्षिणान्नान्
यज्ञान् यथोत्साहमुदारसत्वाः ।
रथोत्सवं चक्रुरथाऽपरे जनाः
शिवस्य विष्णोः परितुष्टयेऽन्ये ॥२६॥

धेनूर्ददुः केचन वत्सयुक्ताः
सकांस्यदोहाः ससुवर्णश्रृङ्गीः ।
सताम्रपृष्ठाश्च खुरोत्ततारा:
सुवर्णवासोभिरलङ्कृताश्च ॥२७॥

द्विजोत्तमेभ्यः कुलशीलवद्भ्यः
सीदत्कुटुम्बेभ्य उपागतेभ्यः ।
सम्पूज्य भक्त्या विधिवद्विधिज्ञा
दानेन चानेन हरिः प्रसीदतु ॥२८॥

केचित्तिलान् व्याहृतिभिर्विधिज्ञाः
कृपीटयोनौ जुहुवुः समिद्धे ।
उपात्तनानाघनिबर्हणाय
स्वचित्तशुद्ध्यै शिवतुष्टये च ॥२९॥

केचिन्महान्यासविधि विधाय रुद्राभिषेकं विदधुः शिवाय ।
चक्रुर्जनाः केचन रुद्रजाप्यं महामनून् जेपुरथो परे च॥३०॥

पञ्चामृतैरिक्षुरसैः सुगन्धि–
तोयैरकुर्वन् सुमहाभिषेकम् ।
श्रीवीरनारायणतोषणाय
तद्देवताकैः पुरुषादिसूक्तैः ॥३१॥

आनर्चुरीड्यं पुरुषं पुराणं
दलैस्तुलस्या विविधैश्च पुष्पैः ।
धूपैश्च दीपैः सरसोपहारै–
स्तांबूलनानाफलदक्षिणाभिः ॥३२॥

प्रदक्षिणाभिर्नतिभिः स्तवैश्च
प्रसादयामासुरुदारमूर्तिम् ।
मिष्टान्नदानैरपरे द्विजाग्र्यान्
सन्तर्पयामासुरुदारसत्वाः ॥३३॥

उषित्वा तत्र तं मासं कृत्वा यात्रां यथाविधि ।
जनाः सुकृतिनो देशं स्वं स्वं जग्मुस्तपोधनाः ॥३४॥

एवं प्रत्यब्दमाजग्मुर्जनाः क्रतुपुरं शुभम् ।
सा यात्रा माकरी विप्राः पुण्या नाद्याप्युपारमत् ॥३५॥

अतः परं कलौ प्राप्ते प्रायशः पापिनो जनाः ।
अवज्ञास्यन्ति तीर्थानि क्षेत्राणि च कुबुद्धयः ॥३६॥

तीर्थानि दूषयिष्यन्ति लुण्ठयिष्यन्ति यात्रिकान् ।
देवब्राह्मणवृत्तीनां करिष्यन्ति विलोपनम् ॥३७॥

इत्यादयो धर्मलोपा भविष्यन्ति कलौ युगे ।
पाषण्डिनो भविष्यन्ति धर्मप्रलयकारिणः ॥३८॥

विरलास्तत्र धर्मिष्ठा भविष्यन्ति क्वचित् क्वचित् ।
स्थास्यन्ति तेषां देशेषु देवब्राह्मणवृत्तयः ॥३९॥

यथोदयति तिग्मांशौ समुल्लसति पङ्कजम् ।
तथोल्लसति सद्धर्मो धर्मिष्ठे सति राजनि ॥४०॥

प्रचरन्ति यथा रात्रौ पिशाचाः प्राणिहिंसकाः ।
प्रचरन्ति दुराचारास्तथा पापिनि राजनि ॥४१॥

तीर्थक्षेत्रादिमाहात्म्यं माहात्म्यं श्रौतकर्मणाम् ।
माहात्म्यं ब्राह्मणानां च माहात्म्यं च तपस्विनाम् ॥४२॥

वेदशास्त्रादिविद्यानां देवतानां तथैव च ।
प्रकृष्टं जायते राज्ञि धर्मिष्ठे सति नान्यथा ॥४३॥

कृतप्रवर्तको राजा राजा नेता कलेरपि ।
राजन्वति महादेशे निवसन्ति तपोधनाः ॥४४॥

चातुर्वर्ण्यं च तत्रैव सुवृष्टिः सस्यसम्पदः ।
तत्र क्षेत्राणि तीर्थानि देवतायतनानि च ॥४५॥

धर्म्या विवाहास्तत्रैव श्रौतस्मार्तादिसत्क्रियाः ।
माहात्म्यप्रकटीभावाः सर्वेषां तत्र जायते ॥४६॥

तत्सर्व लुप्यते तत्र यत्र राजा न धार्मिकः ।
कालो वा कारणं राज्ञो राजा वा कालकारणम् ॥४७॥

सिद्धान्तस्तत्र दृष्टोऽस्ति राजा कालस्य कारणम् ।
कलावपि भविष्यन्ति राजानो यत्र धार्मिकाः ॥४८॥

तीर्थक्षेत्रादि माहात्म्यं सर्वं तत्र भविष्यति ।
कृतादिषु युगेष्वासन् नृपाः केचिदधार्मिकाः ॥४९॥

कलावपि भविष्यन्ति नृपाः केचिन धार्मिकाः ।
तस्मात्कलिरिति प्राज्ञा यत्र वक्ष्यन्ति नो नृपाः ॥५०॥

धर्मः सर्वात्मकस्तत्र सर्वं सम्पत्स्यते ध्रुवम् ।
अदृष्टवादं सन्त्यज्य लोका यत्नं प्रकुर्वते ॥५१॥

एवं त्यक्त्वा कालवादं धर्मं कुर्याद्विचक्षणः ॥५२॥

न जातु कामान्न भयान्न लोभा
द्धर्मं जह्याज्जीवितस्याऽपि हेतोः ।
तस्माद्धर्मः सेवनीयः प्रयत्नात्
सत्यं सत्यं प्रतिजानामि सत्सु ॥५३॥

इदं क्रतुपुराख्यानं सर्वपापप्रणाशनम् ।
श्रद्धधानैर्धर्मपरैः श्रोतव्यं नित्यमास्तिकैः ॥५४॥

पुराणेष्वर्थवादत्वं ये वदिष्यन्ति दुर्बुधाः ।
तेषां पुण्यानि नश्यन्ति सञ्चितानि च तैः पुरा ॥५५॥

अश्रद्धया पुराणानि ये शृण्वन्ति नराधमाः ।
असत्कृत्या नमस्कृत्य तेषां पापं पदे पदे ॥५६॥

ये श्रद्धया च भक्त्या च तथा सत्कारवन्दनैः ।
श्रोष्यन्ति सज्जना नित्यं तेषां पुण्यं पदे पदे ॥५७॥

मुहूर्तं वा तदर्धं वा ये पुराणानि श्रृण्वते ।
त एव मानवाः सर्वे यान्ति ब्रह्म सनातनम् ॥५८॥

पुराणवाचकं भक्त्या पूजयन्ति च ये नराः ।
त एव कथिताः शास्त्रे यथोक्तफलभागिनः ॥५९॥

यः शैवो विष्णुमाहात्म्यं पुराणेषु विलोपयेत् ।
वैष्णवो वापि माहात्म्यं शैवं स ब्रह्महा स्मृतः ॥६०॥

शैवानां वैष्णवानां वा वस्त्वभेददृशां सताम् ।
अमत्सराणां दान्तानां शान्तानां वीतरागिणाम् ॥६१॥

स्वदारनिरतानां च वाग्मिनां संशयच्छिदाम् ।
पौराणिकानां श्रोतव्यं पुराणं भावपूर्वकम् ॥६२॥

इत्येतन्महदाख्यानमधिकृत्य क्रतोः पुरम् ।
वर्णितं सर्वपापघ्नं भूयः किं श्रोतुमिच्छथ ॥६३॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
तीर्थक्षेत्रवर्णनं नाम पञ्चदशोऽध्यायः ॥

# ॥ अथ षोडशोऽध्यायः ॥

ऋषय ऊचुः ।

त्वया क्रतुपुरं क्षेत्रं समन्ताद्योजनत्रयम् ।
सूतोक्तं सन्ति कास्तत्र देवताः शंस ता हि नः ॥१॥

सूत उवाच ।

पश्चात्क्रतुपुरस्याऽस्ति क्षेत्रमन्नगिरीति यत् ।
तस्य वक्ष्यामि माहात्म्यं श्रुणुध्वं सुसमाहिताः ॥२॥

प्रधानं तत्र यत्क्षेत्रं यावद्योजनमीरितम् ।
तत्राप्यवान्तराणां च क्षेत्राणामस्ति सङ्करः ॥३॥

इदमन्नगिरिक्षेत्रं समन्ताद्योजनान्वितम् ।
पूर्वक्षेत्रेण संयुक्तमतोऽधिकफलप्रदम् ॥४॥

पूर्वं तत्राऽभवल्लिङ्गं भूगर्भगतमुत्तमम् ।
प्रातः प्रातः समायान्ति पञ्च कामदुघाः सदा ॥५॥

अभिषिञ्चन्ति तल्लिङ्गं मुहूर्तममृतैः स्वकैः ।
भक्त्याऽभिषिच्य तल्लिङ्गं प्रयान्ति त्रिदिवं प्रति ॥६॥

एवं गतेषु वर्षाणां सहस्रैर्देवमानतः ।
आगच्छद्धंसयानेन तत्र ब्रह्मा सुरैः सह ॥७॥

तत्राऽऽगते सुरश्रेष्ठे भुवमुद्भिद्य तत्क्षणात् ।
लिङ्गं प्रादुरभूद्दिव्यं सर्वलक्षणलक्षितम् ॥८॥

तदानीमेव ता गावः पञ्च तत्र समागताः ।
ऊर्ध्वग्रीवोग्रपुच्छास्तं प्रणम्यावस्थिताः पुरः ॥९॥

अब्रवीच्च प्रसन्नात्मा ब्रह्मा लोकपितामहः ।
प्रब्रूत यदभीष्टं वस्तत्प्रयच्छामि धेनवः ! ॥१०॥

कामधेनव ऊचुः ।

आत्मीयैरमृतैर्ब्रह्मन्निदं लिङ्गं निरन्तरम् ।
अभिषिक्तं प्रसन्नाभिरस्माभिः शाश्वतीः समाः ॥११॥

तस्मात् प्रतिष्ठा लिङ्गस्य त्वयाऽत्र क्रियतां विधे ! ।
प्रसिद्धिं यातु लोकेऽस्मिन्नमृतेश्वरसंज्ञया ॥१२॥

इदं कामदुघं लिङ्गं सकामानां भविष्यति ।
निष्कामानां तु भक्तानां भविष्यत्यमृतं त्विदम् ॥१३॥

इदं लिङ्गमसम्पूज्य त्रिकूटेशं व्रजन्ति ये ।
तेषां यात्रा निष्फलाऽस्तु वरमेतं वृणीमहे ॥१४॥

ब्रह्मोवाच ।

गावो वै रुद्रदैवत्याः श्रुतिरेषा सनातनी ।
इत्यालोक्य मया युष्मत्प्रीतयेऽत्र समागतम् ॥१५॥

यद्यदिष्टं कामदुघाः ! भवतीनां करोमि तत् ।
क्षणं कुरुध्वमत्रैव यावदत्र वसाम्यहम् ॥१६॥

इत्युक्त्वा पद्मभूर्धेनूराहूय तनयान् स्वकान् ।
उवाच यज्ञसम्भारान् सम्भरध्वं सुरैः सह ॥१७॥

सामग्री क्रियतां चापि लिङ्गस्याऽस्य प्रतिष्ठितेः ।
एकां क्रियां द्व्यर्थकरीं दिष्ट्या कर्तुमिहोत्सवे ॥१८॥

इति ब्रह्मवचः श्रुत्वा देवाः शक्रपुरोगमाः ।
पुरोधायर्त्विजश्चक्रुर्यज्ञायतनमुत्तमम् ॥१९॥

जनाश्रयं च चक्रुस्ते प्रतिष्ठार्थं महेशितुः ।
यथाशास्त्रं पद्मकुण्डं चक्रुर्होमस्य सिद्धये ॥२०॥

भृगुमत्रिं वसिष्ठं च पुलस्त्यं पुलहं क्रतुम् ।
मरीचिं कश्यपं दक्षं शुक्रमङ्गिरसं गुरुम् ॥२१॥

तथोतथ्यं च संवर्तं कर्दमं कपिलं तथा ।
यज्ञार्थमृत्विजस्त्वेतान् वव्रे स हि निजात्मजान् ॥२२॥

जाबालवामदेवादीन् वव्रे लिङ्गप्रतिष्ठितेः ।
आरेभे प्रथमं लिङ्गप्रतिष्ठां पद्मसम्भवः ॥२३॥

धर्मपत्न्या गिरा युक्तः कृतस्वस्त्ययनो विधिः ।
मण्डपं पूजयामास पताकाभिर्विमण्डितम् ॥२४॥

होमं च बलिदानं च प्रत्यहं विधिपूर्वकम् ।
सम्पाताज्यावलेपं च रुद्रसूक्ताभिषेचनम् ॥२५॥

अन्नसन्तर्पणायान्नपर्वतान् व्यधितात्मभूः ।
सङ्कल्पमात्रोपनतान् प्रियकामः प्रजापतिः ॥२६॥

तस्मादन्नस्य भूयस्त्वात् क्षेत्रमन्नगिरीति यत् ।
अमृतेश्वरसंज्ञा च द्वयमन्वर्थकं त्विदम् ॥२७॥

एवं लिङ्गप्रतिष्ठायां वृत्तायां विधिपूर्वकम् ।
मेघगम्भीरया वाचा निजगादामृतेश्वरः ॥२८॥

अमृतेश्वर उवाच ।

भो पद्मयोने ! भो विष्णो ! भो देवा ऋषयोऽखिलाः ।
शृण्वन्तु सर्वे मद्वाक्यं सर्वलोकोपकारकम् ॥२९॥

सदा सन्निहितो लिङ्गे वसाम्यत्र न संशयः ।
भक्तानां पूरयन् कामान् कामपूरोऽस्मि कामिनाम् ॥३०॥

अत एव त्रिलोक्यां हि मम क्षेत्राणि भूरिशः ।
मम क्षेत्रार्धभागेन विष्णुक्षेत्राणि सर्वतः ॥३१॥

योऽस्मिन्नन्नगिरिक्षेत्रे समन्ताद्योजनान्विते ।
तिष्ठन्ति पूजयन्तो माममृतेश्वरसंज्ञितम् ॥३२॥

तेभ्यो भुक्तिं च मुक्तिं च प्रयच्छामि न संशयः ।
अत्र स्थित्वा मम क्षेत्रे मह्यं द्रुह्यन्ति मानवाः ॥३३॥

कुर्वन्ति वृत्तिच्छेदं वा तेषां वंशक्षयो भवेत् ।
ये नृपा मम पूजार्थं वृत्तिं दास्यन्ति भक्तितः ॥३४॥

ब्राह्मणेभ्यश्च मत्प्रीत्यै तेषां वंशः स्थिरो भवेत् ।
ये कुर्वन्ति मम प्रीत्यै प्रत्यब्दे स्यन्दनोत्सवम् ॥३५॥

तस्मै भक्ताय दास्यामि मम सायुज्यमन्ततः ।
इति श्रुत्वा शिववचो हरिब्रह्मादयः सुराः ॥३६॥

ऋषयश्च महा भागा अमृतेश्वरमस्तुवन् ।
नमः शिवाय शम्भवे शशाङ्कभित्तमौलये
कृपीटयोनिवासरेशशीतधामचक्षुषे ।
प्रचण्डकुण्डलीशकर्णयुग्मकुण्डलाय ते
नमोऽमृतेश्वराय चित्सुखामृताब्धये नमः ॥३७॥

नमो हिरण्यबाहवे हिरण्यशैलधन्वने
हिरण्यगर्भमाधवादिदेववन्दिताङ्घ्रये ।
धरण्यबग्निवायुखार्कसोमयज्वमूर्तये
नमोऽमृतेश्वराय चित्सुखामृताब्धये नमः ॥३८॥

नमोऽम्बिकाधवाय दग्धशम्बरारिवर्ष्मणे
भवाय सर्ववेदराशिवेद्यवैभवाय ते ।
भवान्तकाय भाविताय योगिभिर्हृदम्बुजे
नमोऽमृतेश्वराय चित्सुखामृताब्धये नमः ॥३९॥

इति स्तुत्वा महादेवं ब्रह्माद्या अमृतेश्वरम् ।
साष्टाङ्गं प्रणिपत्याग्रे तस्थुः प्राञ्जलयोऽग्रतः ॥४०॥

अमृतेश्वर उवाच ।

यौष्माकीणमिदं स्तोत्रं त्रिसन्ध्यं ये द्विजोत्तमाः ।
पठिष्यन्ति सदा तेषां सुलभाः सर्वसिद्धयः ॥४१॥

अस्मिन् क्षेत्रे भविष्यन्ति प्रत्यब्दं सस्यसंपदः ।
गावः सर्वा बहुक्षीरा वर्षाश्च बलवत्तराः ॥४२॥

देवब्राह्मणवृत्तिघ्नानधर्मनिरतान् बलात् ।
अस्मिन् क्षेत्रे स्थितान् सर्वान् नाशयिष्यामि तानहम्॥४३॥

देवब्राह्मणवृत्तीनां पालकान् धर्मतत्परान्
सज्जनान् पालयिष्यामि प्रतिजाने त्रिरुच्चकैः ॥४४॥

कामधेनव ऊचुः ।

अस्माकं तनयः शम्भो ! शक्वरस्तव वाहनम् ।
अस्मिन्नभिहिते शैले पूजामाप्नोतु शाश्वतीम् ॥४५॥

याभिरित्यर्थितं ताभ्यो वरं दत्वाऽमृतेश्वरः ।
पश्यतां सर्व देवानां तल्लिङ्गेन्तर्दधे हरः ॥४६॥

ततो विधिरुपाक्रान्तं विधिपूर्वं महाक्रतुम् ।
विधाय विविधोत्साहं सत्यलोकं जगाम ह ॥४७॥

देवाश्च देवऋषयो गन्धर्वाप्सरसस्तथा ।
यथागतं ययुः सर्वे वर्णयन्तोऽमृतेश्वरम् ॥४८॥

अमृतेश्वरमाहात्म्यमित्येतत् कथितं मया ।
भवत्सु पुण्यशीलेषु किं भूयः श्रोतुमिच्छथ ॥४९॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
अमृतेश्वरवर्णनं नाम षोडशोऽध्यायः ॥

# ॥ अथ सप्तदशोऽध्यायः ॥

ऋषय ऊचुः ।

अमृतेश्वरमाहात्म्यं श्रोतुमिच्छामहे पुनः ।
अमृतं पिबतः कस्य तृप्तिर्भवति सूतज ॥१॥

कथयस्व कथां पुण्याममृतेशप्रसङ्गजाम् ।
अस्माकं मिलितोऽसि त्वं दिष्टया पौराणिकोत्तमः ॥२॥

सूत उवाच ।

श्रुणुध्वममृतेशस्य माहात्म्यमृषिसत्तमाः ! ।
सम्पादयेत तत्प्राप्ति श्रोतॄणां को भवादृशाम् ॥३॥

यदा पञ्चसुताः पाण्डोर्वनवासमकुर्वत ।
ऋषिभिर्बहुसाहस्रैर्वृता धर्मपरायणैः ॥४॥

निरीक्षमाणाः क्षेत्राणि तीर्थानि च ततस्ततः ।
कृष्णाया दक्षिणे कूले यानि यानि विशेषतः ॥५॥

ते क्रमेणैव सम्प्राप्ताः क्षेत्रं सिद्धिप्रदं भुवि ।
ऋषिभिः सहिता वीरास्तदन्नगिरिसंज्ञितम् ॥६॥

मध्याह्नार्कनिदाघार्ताः क्षुधिताश्च पिपासिताः ।
अमृतेश्वरमासाद्य प्रणेमुर्दण्डवद्भुवि ॥७॥

द्रौपदी च महाभागा प्रणनामामृतेश्वरम् ।
प्रणम्य सा शिवं किञ्चिन्मनसाऽचिन्तयत् सती ॥८॥

द्रौपद्या चिन्तितं ज्ञात्वा सर्वात्मा परमेश्वरः ।
धेनूः सञ्चोदयामास तेषामातिथ्यकर्मणि ॥९॥

क्षणात्तत्रागताः पञ्चधेनवः कामितार्थदाः ।
असृजन्नन्नपानानि स्वादूनि रसवन्ति च ॥१०॥

दधिकुल्या दुग्धकुल्या घृतकुल्याश्च सर्वतः ।
वृक्षांश्च शीतलच्छायान्निर्ममुश्च जनाश्रयान् ॥११॥

सहस्रपरिवेष्टार उपतस्थुः सुवर्चसः
पाण्डवान् भोजयामासुः पुरस्कृत्य तपोधनान् ॥१२॥

तृप्तेषु तेषु सर्वेषु सदन्नैरमृतोपमैः ।
स्वाचान्तेषूपविष्टेषु प्रणष्टाध्वश्रमेषु च ॥१३॥

तत्राऽऽजगाम विप्राग्र्यः करेण धृतयष्टिकः ।
पाण्डवः क्वेति संपृच्छन् तापसान् स शनैःशनैः ॥१४॥

तमागतमभिप्रेक्ष्य पृच्छन्तं स्वं च धर्मराट् ।
स्वयमुत्थाय वेगेन तदन्तिकमुपाययौ ॥१५॥

अभिवन्द्य द्विजं वृद्धं गृहीत्वा दक्षिणं करम् ।
ऋषिणां मध्यमानीय कृष्णाजिनमसादयत् ॥१६॥

उपविश्यासने विप्रः समाश्वास्य क्षणं ततः ।
मन्दं मन्दमुवाचेदं धर्मराजं युधिष्ठिरम् ॥१७॥

ब्राह्मण उवाच ।

युधिष्ठिर ! निबोध त्वं यत्त्वां वक्ष्यामि भारत ।
राज्याच्छतगुणं मन्ये तवेदमधिकं सुखम् ॥१८॥

पुण्यक्षेत्रेषु गमनं पुण्यतीर्थावगाहनम् ।
दर्शनं प्रतिमानां च केशवस्य शिवस्य च ॥१९॥

तपस्विनां योगिनां च कर्मिणां ज्ञानिनां तथा ।
सहावस्थानमेकत्र संल्लापश्चाऽपि तैः सह ॥२०॥

इदमेकैकशो राजन्नश्वमेधाधिकं मतम् ।
महानुभावसंसर्गो हेतुः स्वर्गापवर्गयोः ॥२१॥

द्रौपद्या भार्यया तेऽद्य प्रणमन्त्याऽमृतेश्वरम् ।
यच्चिन्तितं सुसम्पन्नं कच्चित्तां पृच्छ भूपते ॥२२॥

इति वृद्धवचः श्रुत्वा पाञ्चालीमब्रवीन्नृपः ।
किं त्वया चिन्तितं भद्रे ! सत्यं ब्रूहि ममाग्रतः ॥२३॥

द्रौपद्युवाच ।

अस्यामापदि सम्प्राप्ता क्षेत्रमेतदहं शिव ! ।
विप्रसन्तर्पणे शक्तिर्मम नास्ति क्षमां कुरु ॥२४॥

इति ध्यातं मया चित्ते सत्यमेतद् ब्रवीम्यहम् ।
अस्मिन्नर्थे प्रमाणं मे सर्वज्ञोऽयं द्विजोत्तमः ॥२५॥

एवमुक्ते तु पाञ्चाल्या विप्रो राजानमब्रवीत् ।
यदुक्तमिह पाञ्चाल्या तत्तथा न तदन्यथा ॥२६॥

भूयः श्रृणु महाराज यद्ब्रवीमि हिताय ते ।
देवगुह्यं न वक्तव्यं तथापि कथयामि ते ॥२७॥

यो मातुलेयो युष्माकं कृष्णः कंसनिषूदनः ।
स साक्षाद्भगवान् विष्णुरवतीर्णो महीतले ॥२८॥

दुर्योधनादयः पापा दैतेया राजरूपिणः ।
तेषां नाशाय विधिना प्रार्थितस्तद्विधास्यति ॥२९॥

अक्षोहिण्यः कुरुक्षेत्रे मिलिष्यन्ति दशाष्ट च ।
मारयिष्यति ताः कृष्णो निमित्तीकृत्य पञ्च वः ॥३०॥

स्वराज्यं प्राप्स्यथ क्षिप्रं मा विषीदत पुत्रकाः ।
इयमापत् सुखोदर्का भविष्यत्यचिरादिव ॥३१॥

इतः क्रतुपुरक्षेत्रं यूयं गच्छत सर्षयः ।
कृष्णातुङ्गाख्ययोर्नद्योर्मध्ये तत् क्षेत्रमुत्तमम् ॥३२॥

लिङ्गरूपी त्रिकूटेशो वीरनारायणो हरिः ।
उभौ हरिहरौ देवावासाते कामितार्थदौ ॥३३॥

तौ दृष्ट्वा नेत्रसाफल्यमवाप्येत यथासुखम् ।
इत्युक्त्वा ब्राह्मणो वृद्धस्तत्रैवान्तर्हितोऽभवत् ॥३४॥

अन्तर्हिते ततस्तस्मिन् प्रजीर्णे ब्राह्मणोत्तमे ।
पाण्डवा द्रौपदी ते च मुनयो विस्मयं गताः ॥३५॥

अथोचुस्तस्य माहात्म्यं धर्मराजं द्विजोत्तमाः ।
अमृतेश्वर एवायं राजन् मा संशयं गमः ॥३६॥

विप्राणां वचनं श्रुत्वा धर्मराजो युधिष्ठिरः ।
अमृतेश्वरमभ्येत्य ननाम भ्रातृभिः सह ॥३७॥

उषित्वा तत्र तां रात्रिं प्रातर्नत्वाऽमृतेश्वरम् ।
तमेव संस्तुवन्तस्ते ययुः क्रतुपुरं प्रति ॥३८॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि सहस्रशः ।
लेभिरेऽभीप्सितानर्थानमृतेशप्रसादतः ॥३९॥

इत्येतत्कथितं विप्रा माहात्म्यममृतेशितुः ।
मया भवद्भिः पृष्टेन किं भूयः श्रोतुमिच्छथ ॥४०॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
अन्नगिरिप्रशंसानाम सप्तदशोऽध्यायः ॥

# ॥ अथ अष्टादशोऽध्यायः ॥

ऋषय ऊचुः ।

सूत जीव चिरं साधो त्वं हि पौराणिकोत्तमः ।
अश्रावयस्त्वं सततं कथा नः पावनीः शुभाः ॥१॥

तस्मिन्नन्नगिरिक्षेत्रे किञ्चिदन्यत् कुतूहलम् ।
आसीत्तन्नः समाचक्ष्व सर्वं वेत्ति यतो भवान् ॥२॥

सूत उवाच ।

आसीदन्नगिरिक्षेत्रे दैत्यपीडा निरन्तरम् ।
तं दैत्यं घातयामास वृषभेणाऽमृतेश्वरः ॥३॥

हिरण्याक्षकुलोत्पन्नः कश्चिद्दैत्यो दुरासदः ।
शङ्कुकर्ण इति ख्यातः कामरूपी मदोद्धतः ॥४॥

क्षेत्रस्य दक्षिणेभागे नीलकुन्दाह्वये गिरौ ।
न्यवसीद्दारुणः कोपि तादृशैरसुरैर्वृतः ॥५॥

पञ्चक्रोशात्मकं क्षेत्रं मूलकुन्दमितीरितम् ।
तत्र सिद्धेश्वराख्यं हि लिङ्गं सिद्धैः प्रतिष्ठितम् ॥६॥

स शङ्कुकर्णः पापीयान् तत्क्षेत्रद्वयकण्टकः ।
अबाधिष्ट प्रजाः सर्वा बालान् गृह्णन् पुनः पुनः ॥७॥

केषांचिदहरन्नारीः केषांचिदहरद्धनम् ।
केषांचिदहरद्धान्यमन्येषां च पशून् वसु ॥८॥

अशक्नुवत्यस्तान् क्लेशान् प्रजास्तममृतेश्वरम् ।
त्राहि त्राहीति शरणं शरण्यं वरदं ययुः ॥९॥

प्रजा ऊचुः ।

त्राहि त्राहि महादेव! प्रपन्नार्तिविनाशन! ।
मृत्युञ्जय विरूपाक्ष त्राहि त्राहि महेश्वर ॥१०॥
यथा त्रातं त्वया शम्भो कालकूटभयाज्जगत् ।
तथा नस्त्राहि भूतेश ! पापादस्मान्महासुरात् ॥११॥
मार्कण्डेयो यथा त्रातः कालपाशात् कृपानिधे ! ।
तथा नस्त्राहि दुर्धर्षादस्मादाशु महासुरात् ॥१२॥
त्वमेव जगतः स्रष्टा त्वं पोष्टा नस्त्वमेव हि ।
कं वयं शरणं यामस्त्वां विना परमेश्वरम् ॥१३॥
एवं तान् स्तुवतोऽकस्माद्वागुवाचाशरीरिणी ।
निहनिष्यामि तं पापं व्येतु वोऽसुरजं भयम् ॥१४॥
एवं श्रुत्वा गिरं दिव्यां जनास्तत् क्षेत्रवासिनः ।
शंङ्कुकर्णं हतं मत्वा नत्वा देवं ययुर्गृहान् ॥१५॥
अथ शम्भुर्वृषं प्राह जहि तं क्षेत्रकण्टकम् ।
सानुगं यो जगद्द्रोही स वध्य इति मे व्रतम् ॥१६॥
एतच्छ्रुत्वा प्रभोर्वाक्यं नत्वा तं जगदीश्वरम् ।
प्रययौ कियदित्युक्त्वा निहन्तुमसुराधमम् ॥१७॥
कुन्देन्दुशङ्खदुग्धाम्बुनिधिडिण्डीरपाण्डुरः ।
महामरकतप्रख्यविषाणद्वयसुन्दरः ॥१८॥
शङ्कुकर्णो महानेत्रः खर्वग्रीवो महाककुत् ।
घण्टिकादामविभ्राजत्प्रलम्बगलकम्बलः ॥१९॥
श्लक्ष्णाङ्गकान्तिः सत्पृष्ठः सुपार्श्वः कृष्णनासिकः ।
सुवालधिः कृष्णशफः कमनीयतराकृतिः ॥२०॥

भेरीभोङ्कारधिक्कारक्षमहम्भारवोद्धतः ।
तीक्ष्णशृङ्गाग्रविध्वस्तगण्डशैलः खनन् महीम् ॥२१॥

नीलकुन्दगिरिं प्राप्य शङ्कुकर्णमुपाह्वयत् ।
एह्येहि दुष्टदैतेय मया योद्धुमिति ब्रुवन् ॥२२॥

तं दृष्टवा प्रतिशैलाभं वृपभं योद्धुमागतम् ।
शङ्कुकर्णोऽसुरः क्रुद्धः सङ्ग्रामाय विनिर्ययौ ॥२३॥

असुराणां सहस्रेण समन्तात् परिवारितः ।
कज्जलाद्रिनिभः पानमदघूर्णितलोचन. ॥२४॥

त्रिशूलं भ्रामयन् पाणौ शक्वरं तमुपाद्रवत् ।
तिष्ठ तिष्ठ महोक्ष ! त्वां नयामि यममन्दिरम् ॥२५॥

इति ब्रुवन्तमसुरं दृष्टवा क्रोधसमन्वितः ।
शक्वरोऽभिययौ योद्धुं गजः प्रतिगजम् यथा ॥२६॥

शृङ्गाभ्यां निशिताग्राभ्याममुरांस्तत्पदानुगान् ।
व्यदारयदुदग्राग्रखुरविक्षतवक्षसः ॥२७॥

कालयन्नसुरानुक्षा शङ्कुकर्णमुपाह्वयत् ।
अथाऽसुरस्त्रिशूलेन विभेद्य हृदि तं वृपम् ॥२८॥

तच्छूलं तदुरः प्राप्य पफालाशनिसंनिभम् ।
तदुत्सृज्यासुरः शक्तिं निजग्राहोरगीमिव ॥२९॥

तमाविध्यासुरः क्रोधात्क्षिक्षेपाजौ ककुद्मिनि ।
तामपि व्यथयामास वलीवर्दः प्रतापवान् ॥३०॥

तस्मिन्नेवान्तरे गौस्तानसुरांस्तत्पदानुगान् ।
तांश्च शृङ्गप्रहाराभ्यामनयद्यमसादनम् ॥३१॥

तस्यातिवलिनः शम्भोर्वाहनस्य ककुद्मिनः ।
अक्षमाः सोढुमसुरा दुद्रुवुः मर्वतो भयात् ॥३२॥

विद्रुतेषु स्ववीरेषु शङ्कुकर्णोऽत्यमर्षणः ।
गदामाविध्य तरसा ताडयामास तं वृषम् ॥३३॥

ग्रीवामानम्य शृङ्गाग्रं पुरोधाय महावृषः ।
वेगेनाऽऽगत्य दैत्यस्य कुक्षिभाण्डं बिभेद ह ॥३४॥

तदन्त्राणि विषाणाभ्यां बिभ्रन् स शुशुभे वृषः ।
क्षतजादिग्धसर्वाङ्गः सन्ध्यारागं विडम्बयन् ॥३५॥

निहतं स्वामिनं दृष्ट्वा वृषं च जितकाशिनम् ।
हतशेषास्तदा दैत्याः पातालं विविशुर्भयात् ॥३६॥

तत. प्रणष्टेष्वसुरेषु लोकाः
क्षेत्रद्वयस्थाः प्रययु. प्रहृष्टाः ।
सदीपपात्र्यञ्चितपाणिकाभिः
पुरन्ध्रिकाभिर्वृषभं सभाजितुम् ॥३७॥

ते तत्र दृष्टवा कृतविक्रमं वृषं
महासुराङ्गोत्थितशोणितोक्षितम् ।
अष्टाभिरङ्गैः प्रणयप्रवृद्ध–
प्रसन्नभावा अवनौ प्रणेमुः ॥३८॥

केचिद्वृषस्य वृषणौ कण्डूयांचक्रिरे जनाः ।
केचित्तं स्नापयामासुर्महोक्षं शीतलैर्जलैः ॥३९॥

पूजां च चक्रिरे गन्धैर्माल्यैर्धूपैश्च दीपकैः ।
अग्रे चणकदालीनां राशिं चक्रुर्गुडान्वितम् ॥४०॥

स्त्रियो नीराजयामासुर्वृषं मङ्गलगीतिभिः ।
वादित्रं वादयामासुर्ननृतुर्वारयोषितः ॥४१॥

ब्राह्मणास्तुष्टुवुर्भक्त्या तमुक्षाणं विचक्षणाः ।
चतुराम्नायगैः सूक्तैः साक्षाद्धर्मं वृषाह्वयम् ॥४२॥

त्वमस्माकं पिताऽभूस्त्वं माता नास्त्यत्र संशयः ।
त्वयैव धार्यते विश्वमन्नदोऽसि त्वमेव नः ॥४३॥

ब्रह्मविष्ण्विन्द्रमुख्यानां देवानां वाहनैरलम् ।
विश्वम्भरं शैवमेव वाहनं मङ्गलायनम् ॥४४॥

सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
यन्मूत्रमधितिष्ठन्ति गोमये श्रीश्च तिष्ठति ॥४५॥

आदित्या वसवः साध्या विश्वेदेवा मरुद्गणाः ।
पितरो यक्षगन्धर्वा रुद्रा नागा मृगाः खगाः ॥४६॥

ऋषयो वालखिल्याश्च वेदाः शास्त्राणि कृत्स्नशः ।
यदङ्गान्यधितिष्ठन्ति कोऽन्यः सर्वेश्वरस्ततः ॥४७॥

न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजा ।
लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा ॥४८॥

हरिब्रह्मादयो देवा यस्य लिङ्गमुपासते ।
वृषणौ यस्य वाहस्य कोऽन्यः सर्वोत्तमस्ततः ॥४९॥

इति सम्पूजितो भक्त्या संस्तुतश्च नमस्कृतः ।
प्राह गम्भीरया वाचा गवेन्द्रस्ताः प्रजाः प्रति ॥५०॥

नन्द्युवाच ।

युष्माकं पूजया तुष्टः कं वरं वो ददाम्यहम् ।
तं ब्रूत मत्प्रसादो हि सद्यःफल उदीरितः ॥५१॥

प्रजा ऊचुः ।

धनधान्यसमृद्धिं नः सुप्रजस्त्वं च गोधनम् ।
काले वृष्टिं धर्मबुद्धिं शिवे भक्तिं च देहि नः ॥५२॥

मूलकुन्दप्रजा ऊचुः ।

भो नन्दिन् ! मूलकुन्दस्य पुरोवर्तिनि पर्वते ।
अत्र वासं कुरु स्वामिन् ! अस्माकं प्रीतये सदा ॥५३॥

तेषां कुर्वन् मनोभिष्टं भगवन् वस शक्वर !
तथाऽस्त्विति स तानुक्त्वा तत्रैवान्तरधाद्वृषः ॥५४॥

ततस्ते विस्मिताः सर्वे क्षेत्रद्वयनिवासिनः ।
अन्योन्यमभिसम्पूज्य स्वं स्वं क्षेत्रं मुदा ययुः ॥५५॥

ऋषय ऊचुः ।

महदेतदुपाख्यानं वर्णितं सूतनन्दन ! ।
वृषस्य धर्मरूपस्य श्रुत्वा नो नन्दितं मनः ॥५६॥

इदानी श्रोतुमिच्छामः क्षेत्रेऽन्नगिरिसंज्ञिते ।
यानि तीर्थानि पुण्यानि सम्यगाचक्ष्व तानि नः ॥५७॥

सूत उवाच ।

तीर्थानि न विना देवैः क्षेत्राणि न विना च तैः ।
तस्मात्तीर्थैर्विनाभावः क्षेत्राणां नैव विद्यते ॥५८॥

यत्र प्रकटितो भावस्तीर्थानां मुनिसत्तमाः ।
वापीकूपादिकं तस्मिन् क्षेत्रे तीर्थमयं स्मृतम् ॥५९॥

अमृतेश्वरलिङ्गस्य वापी या पश्चिमेऽस्ति सा ।
सर्वतीर्थमयी तस्यां स्नानं तीर्थफलं लभेत् ॥६०॥

चन्द्रसूर्योपरागेच व्यतीपातेऽयनद्वये ।
राधकार्तिकमाघेषु शिवरात्रौ च पर्वसु ॥६१॥

यः स्नात्वा तत्र देवर्षिपितॄन् सन्तर्पयेञ्जलैः ।
स सर्वतीर्थस्नानस्य लभेताऽविकलं फलम् ॥६२॥

यथाशक्त्यन्नदानं यः क्षेत्रेऽन्नगिरिसञ्ज्ञिते ।
न कुर्यादतिथिभ्यो हि तस्य जन्म निरर्थकम् ॥६३॥

शैवो वा वैष्णवो वाऽपि क्षेत्रेऽन्नगिरिसंज्ञिते ।
निवसेदविरोधेन सोऽनन्तं पुण्यमाप्नुयात् ॥६४॥

शिवनिन्दां प्रकुर्वाणः शिवक्षेत्रेषु यो वसेत् ।
विष्णुक्षेत्रेषु सर्वेषु यो वसेद्विष्णुनिन्दकः ॥६५॥

स याति रौरवं घोरं वंशस्तस्य विनश्यति ।
तस्माच्छिवो वा विष्णुर्वा सेव्यो वस्त्वैक्यबुद्धिभिः ॥६६॥

इदमन्नगिरिक्षेत्रमाहात्म्यं कथितं मया ।
शृण्वतां सर्वपापघ्नं किं भूयः श्रोतुमिच्छथ ॥६७॥

॥ इति श्रीभविष्योत्तरपुराणे उत्तरखण्डे क्रतुपुरमाहात्म्ये
श्रीमदन्नगिरिमहात्म्यवर्णनं नाम अष्टादशोऽध्यायः ॥
॥ श्रीत्रिकूटेश्वर-श्रीवीरनारायणदेवताभ्यो नमः ॥
॥ ममाप्तमिदं पुराणम् ॥



**संसाराब्धिमहासेतुर्धीहेतुः परमेशितुः ।**
**अपाङ्गः पातु मां मातुर्जीवातुः पादसेवितुः ॥**



[illegible]

ಭವಿಷ್ಯೋತ್ತರ ಪುರಾಣಾಂತರ್ಗತವಾದ 'ಶ್ರೀ ಕ್ರತುಪುರ ಮಾಹಾತ್ಮ್ಯಮ್' ಗ್ರಂಥವು ಗದುಗಿನ ಪುರಾಣವನ್ನು ಹೇಳುವ ಅಪರೂಪ ಕೃತಿ. ಅತ್ರಿಗೋತ್ರದ, ಕಳಸಾಪೂರ, ನಾಗಾವಿ, ಬಳಧಡಿ ಗ್ರಾಮಗಳ ಆನುವಂಶಿಕ ಹಕ್ಕುದಾರರೂ ನಿವೃತ್ತ ತಹಶೀಲದಾರರೂ ಧರ್ಮ ಪರಾಯಣರೂ ಆಗಿರುವ ಶ್ರೀ ಕೃಷ್ಣಾಜಿ ಶಂಕರರಾವ ಕುಲಕರ್ಣಿಯವರು ಇದನ್ನು ಸಂಸ್ಕೃತ ಹಾಗೂ ಕನ್ನಡದಲ್ಲಿ ಅರ್ಥಸಹಿತ ಸಂಪಾದಿಸಿ ಮುದ್ರಿಸಿರುವುದರ ಹಿಂದೆ ಮೂವತ್ತು ವರ್ಷಗಳ ಸುದೀರ್ಘ ಪ್ರಯತ್ನವಿದೆ. ಶ್ರೀ ಕೃಷ್ಣಾಜಿ ಶಂ. ಕುಲಕರ್ಣಿಯವರು ಈ ಪುರಾಣಕ್ಕೆ ಸಂಬಂಧಿಸಿದ ಮೂರು ಹಸ್ತಪ್ರತಿಗಳನ್ನು ವೇ. ಬ್ರ. ಶ್ರೀ ಶಂಕರಭಟ್ಟ ಹುಲಿಮನಿಯವರ ಆಜ್ಞೆಯಂತೆ ಬಹಳ ಪರಿಶ್ರಮದಿಂದ ಸಂಗ್ರಹಿಸಿ ಮುಳಗುಂದದ ವಿದ್ವತ್ರತ್ನ ಶ್ರೀ ಶ್ರೀಪಾದ ದೀಕ್ಷಿತ ತಾಪಸರು ಹಾಗೂ ಧಾರವಾಡದ ಬ್ರಹ್ಮಶ್ರೀ ಪಂಡಿತಾವತಂಸ ಬಾಲಚಂದ್ರ ಶಾಸ್ತ್ರಿಗಳ ಮಾರ್ಗದರ್ಶನದಂತೆ ಚಿಕ್ಕಮಗಳೂರಿನ ಭಂಡಿಗಡಿಯ ಶ್ರೀ ಶ್ರೀ ಶ್ರೀ ಜಗದ್ಗುರು ಬದರಿ ಶಂಕರಾಚಾರ್ಯ ಮಹಾಸಂಸ್ಥಾನಂ, ಶಕಟಪುರಂ ಶ್ರೀ ವಿದ್ಯಾಪೀಠದ ಶ್ರೀ ಜಗದ್ಗುರು ಶ್ರೀ ವಿದ್ಯಾಭಿನವ ಶ್ರೀ ಕೃಷ್ಣಾನಂದತೀರ್ಥರಿಂದ ಕನ್ನಡಕ್ಕೆ ಅನುವಾದಿಸುವ ಮಹಾನ್ ಕೆಲಸ ಮಾಡಿದ್ದಾರೆ. ಶ್ರೀಗಳವರದು ಪ್ರಾಸಾದಿಕ ಶೈಲಿ; ಭಾಷಾ ಶುದ್ಧತೆ ಅವರದು ವಿಶೇಷ ಕಾಳಜಿ.

ಕ್ರತುಪುರ ಪುರಾಣವು ಇಡಿಯಾಗಿ ಮುದ್ರಣಗೊಳ್ಳುತ್ತಿರುವುದು ಇದೇ ಪ್ರಪ್ರಥಮ ಸಲವಾಗಿದೆ. ಆಸ್ತಿಕರ ಪಾರಾಯಣಕ್ಕೂ, ಗದುಗಿನ ಪೌರಾಣಿಕ ವಿಷಯದ ಪರಿಚಯ ಮಾಡಲಿಕ್ಕೂ ಸಹಾಯವಾಗಲೆಂಬ ಉದಾತ್ತ ಉದ್ದೇಶದಿಂದ ಪ್ರಕಟಣೆಯ ಸಾಹಸ ಮಾಡಿರುವ ಶ್ರೀ ಕೃಷ್ಣಾಜಿ ಕುಲಕರ್ಣಿಯವರು ನಿಜವಾಗಿಯೂ ಪ್ರಶಂಸಾರ್ಹರು. ಗದುಗಿನ ಜನರಿಗೆ ಗದುಗಿನ ಪೌರಾಣಿಕ ಚರಿತ್ರೆಯನ್ನು ಪರಿಚಯಿಸಿಕೊಟ್ಟ, ಇವರ ಈ ಪುರಾಣವು 20ನೇ ಶತಮಾನದ ಕೊನೆಯ ದಶಕದ ಮುದ್ರಿತ ಕೃತಿಗಳ ಇತಿಹಾಸದಲ್ಲಿ ಸ್ಮರಣಾರ್ಹ ಕೃತಿಯಾಗಿ ಉಳಿಯುವುದರಲ್ಲಿ ಸಂದೇಹವಿಲ್ಲ.

20-12-1998

ಪ್ರೊ. ಎಂ. ಎಚ್. ಹರಿದಾಸ
ಕಾಮರ್ಸ್ ಕಾಲೇಜ್, ಗದಗ

ಮುದ್ರಣ : ವಿಕ್ರಮ ಪ್ರಕಾಶನ, ಗದಗ